ॐ नमो गणेशाय

# कारकचक्रम्

## ( कारकाद्यर्थनिर्णयः )

नत्वा(१) कृष्णपदद्वन्द्वं कारकाद्यर्थनिर्णयः ।
श्रीभवानन्दसिद्धान्तवागीशेन वितन्यते ॥

### कारकत्वविवेचनम्(२) ।

॥ श्रीरामः शरणम् ॥

आरामं जगतामेकं विरामं विपदां सताम् ।
अभिरामं नुमोरामं विश्रामं सर्वसम्पदाम् ॥ १ ॥
टीकान्तराणीन्दुरविप्रभाणि, बाह्यार्थरत्नानि प्रकाशयन्तु ।
अन्तर्निगूढार्थचयप्रकाशे, "प्रदीपः" एषः प्रभुरस्तु स्विदापि ॥ २ ॥

(१) इह खलु प्रारिप्सितप्रकरणपरिसमाप्तिपरिपन्थिप्रत्यर्थिप्रत्यूहव्यूहनिर्वापणाय निरन्तरनिःश्रेयसानामधिगमाय परात्परं वेदान्तवेद्यं सच्चिदानन्दस्वरूपमानन्दकन्दं श्रीकृष्णचन्द्रं प्रणमति । तावत्तत्र भवांस्तर्कवागीशः श्रीभवानन्दः—नत्वेति । अत्र कृष्णपदेन निर्गुणसगुणब्रह्मणो ग्रहणम् । उक्तञ्च विष्णुपुराणे "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।" तथा च निर्गुणपक्षे गश्च समासस्त्वेवं बोध्यः, कृष्णे यद् निर्गुणसगुणाख्यं पदद्वन्द्वमिति, सगुणपक्षे-कृष्णस्येति षष्ठी तत्पुरुषः, अथवा कृष्णे कृष्णप्रतिबिम्बे यत् राधीयं पदद्वन्द्वम्, चरणयुग्ममिति कृष्णपदद्वन्द्वम् । उक्तञ्च गोलोकखण्डे गर्गसंहितायाम्—

"यदाऽन्तरात्मा विदितश्चतुर्भिस्तदा त्वियं लक्षणरूपवृत्तिः ।
यदा विराड्देहधरस्त्वमेवं तदाऽखिलं वा भुवि धारणेयम् ॥
श्यामञ्च गौरं विदितं द्विधा महस्तवैव साक्षात्पुरुषोत्तमोत्तम ! ।"
इत्थञ्च भावुकरसिकानां चन्द्रज्योत्स्नेव श्रीराधैवोपास्या वेविद्यते ।
अनेन ग्रन्थकारस्य दृढाभक्तिः सूचिता(*) ।

(२) अत्रेदं बोध्यम्, शाब्दिकमते 'कारकं स्यात् क्रिया मूलं क्रिया धात्वर्थं उ-

---

(*)कविवर विहारीने उक्त रहस्य को बड़ी मार्मिक चतुरता से प्रतिपादन किया है:-
मेरी भवबाधा हरो राधानागर सोय ।
जा तन की झाईं परत श्याम हरित द्युति होय ॥

आक्षेपवाक्यम्—

तत्र 'क्रियानिमित्तत्वं कारकत्वमि'ति न सामान्यलक्षणम् ॥ १ ॥

---

उच्यते ।" इति वचनेन—

"कारकं षड्विधं, कर्त्ता कर्मापि करणन्तथा ।
सम्प्रदानमपादानं तथाऽधिकरणं स्मृतम्" ॥

इत्येवमाचार्यचरणैरुक्तम् । कारकत्वञ्च, क्रियाजनकत्वम् , करोति क्रियां निर्वर्तयतीति व्युत्पत्तेर्भाष्ये दर्शनात् , न चैवं भूतले घट इत्यादौ प्रथमा न स्यात् , तत्राप्यन्ततोऽस्ति क्रियायाः सत्त्वात्, 'यत्र कावन क्रिया नास्ति तत्राप्यस्तिभवतिविद्यतीनां सत्तेति' भाष्योक्तेः। एवञ्च प्रथमाऽन्तार्थस्यापि क्रियाजनकत्वात्, अस्या अपि कारकविभक्तित्वेन भाष्ये व्यवहारः। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं तस्यान्यथासिद्धत्वेन क्रियाजनकत्वाभावात्। का सा क्रिया ? इत्याकाङ्क्षोदये तु क्रियाया जनकाकाङ्क्षया च तेषां क्रियायामेवान्वय इति तदाशयः। न च क्रियाशब्दस्य प्रधानक्रियायां मुख्यत्वेन कर्मादिकारकाणां प्रधानक्रियाऽनिवर्तकत्वात्कथं तेषां कारकत्वम् , सर्वेषां कारकाणां स्वस्वान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वात्तदुपपत्तेः। न च जनिष्यमाणपुत्राय गां दास्यामीत्यादौ सम्प्रदानत्वं न स्यात्, असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वे सति दातृज्ञानपूर्वकालिकत्वेनैव क्रियाजनकत्वात्। एवं स्तोकं पचतीत्यादौ फलस्यापि स्वज्ञानद्वारा कारकत्वात्कर्मत्वमुपपन्नम्।

क्रियाऽन्वयित्वं कारकत्वमिति तु नाभ्युपगन्तव्यं, "ब्राह्मणस्य पुत्रं पन्थानं पृच्छती"त्यादौ पुत्रद्वारा ब्राह्मणस्य क्रियाऽन्वयित्वेन कारकत्वापत्तेः। न च साक्षात्क्रियान्वयित्वमिति न दोष इति वाच्यम् , तथा सति मातुः स्मरतीत्यादौ मातुः स्मरणक्रियायां साक्षादन्वयेन कारकत्वापत्तेः। अतः पूर्वोक्तलक्षणमेव साधु, मातुः क्रियाजनकत्वेनान्वयित्वाविवक्षणेन नोक्तदोषावसरः।

एवञ्च क्रियानिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताश्रयत्वं कारकत्वमिति पर्यवसितम्। तथाहि "देवदत्तो गच्छती"त्यादौ गमनक्रियानिष्ठविशेष्यतानिरूपिता या प्रकारतासमानाधिकरणविशेष्यता सा च तिङर्थकर्तृनिष्ठा, तादृशविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारता देवदत्तनिष्ठा तदाश्रयः स एवेति तस्य कारकत्वमुपपन्नम्।

कैश्चिद्धात्वर्थान्वयायोग्यत्वं शेषत्वं शेषभिन्नत्वं कारकत्वमित्युक्तम्, तन्न धात्वर्थान्वयायोग्यत्वस्य कारकत्वस्वरूपाग्रहे दुर्ग्रहत्वेनान्योन्याश्रयप्रसङ्गात्। एतेन धात्वर्थान्वितसुबर्थत्वं कारकत्वं विभक्त्यर्थस्य विभक्त्यर्थद्वारकक्रियाऽन्वयित्वं कारकत्वं विभक्तिप्रकृत्यर्थस्यैवायातीति यत् कैश्चिद्भणितं तदपि निरस्तम्। "कान्तस्य त्रस्यतीत्यादौ" षष्ठ्या अर्थे प्रकृत्यर्थे चातिव्याप्तेः। यत्त्वपादानाद्यन्यतमत्वं कारकत्वं

ओं नमः शिवाय ।

प्रणम्य परमं देवं शिवं विवृतिमादरात् ।
तनोति माधवो धीमान् कारकाद्यर्थनिर्णये ॥

कारकेति । कारकाद्यर्थस्य निर्णयो यस्मादिति व्युत्पत्त्या कारकाद्यर्थनिर्णय-

---

नातः काव्यव्याप्त्यतिव्याप्ती इति तन्न, अपादानत्वादेरपि क्वचित्षष्ठ्यर्थत्वात् । किञ्चा-पादानत्वादिकमपि नैकं, ध्रुवत्वासोढत्वादिभेदेन बहुविधत्वादिति नोक्तकारकलक्षणं विचारसहमिति चेत्, उच्यते—नामार्थान्वयप्रयोजकताऽनवच्छेदकीभूतक्रियान्वयिता-वच्छेदकधर्मवत्त्वे सति पदान्तरासमभिव्याहृतसुबर्थत्वं कारकत्वं "कान्तस्य भ्रस्यती"-त्यादौ षष्ठ्यर्थवारणाय भूतान्तं धर्मविशेषणम् । एवञ्च न कुत्रापि–अव्याप्त्यतिव्याप्ति-रूपदोषदानावसर इति परमप्राचीनवैयाकरणाः । केचित्तु–क्रियाजनकत्वयोग्यताबुद्धि-विषयत्वमेव कारकत्वमाहुः । तन्न योग्यता षष्ठ्यादिव्यावृत्ता दुर्वचा ।

अत्रेदमाकूतम् "उपपदविभक्ते"रिति परिभाषायाः प्रथमाविभक्तिरपि विषय-त्वमिति न शङ्कनीयम्, "सहयुक्तेऽप्रधाने"इति सूत्रेऽप्रधानग्रहणं शक्यमकर्तुं तत्र प्रधानादपि तृतीयाऽपत्तिमाशंक्य "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" ति प्रथ-मा भविष्यतीति स्पष्टमेवोक्तत्वात् । तत्र कारकशब्दस्यान्तरङ्गपरत्वेन हरदत्तादिभि-रपि व्याख्यातत्वाच्च ।

यद्यपि शाब्दिकमते सर्वत्र क्रियापदाध्याहारः, तिङ्समानाधिकरणे प्रथमेति न्यासे वा प्रथमायाः क्रियाऽन्वितकारकत्वसम्भवेऽपि, षष्ठ्या अपि क्वचित्तथाऽन्वयसम्भवेन न तत्कारकं व्याकरणव्यवहारप्रयोजकं प्रत्युत अनिष्टावहम् । एवञ्चोपपदविभक्तित्वन्तु पदविशेषसम्बन्धेन विधीयमानविभक्तित्वम् । कारकत्वन्तु सङ्केतविशेषसम्बन्धेन कारकपदवत्त्वम् । भाष्ये "कारके" इत्यस्य संज्ञापरत्वेन व्यवस्थापनात् । तथा 'ब्राह्म-णस्य पुत्रं पन्थानं पृच्छती'त्यत्र ब्राह्मणस्य संज्ञा कुतो न भवतीत्याशङ्क्य अकथित-शब्दोऽसङ्कीर्तिते वर्तते । केनासङ्कीर्त्तितम्? अपादानादिविशेषकथाभिः । तथाच विप्र-योगस्यापि विशेषावगतिहेतुत्वादन्वर्थसंज्ञाविज्ञापनाद्वा ब्राह्मणस्य न भवति संज्ञे-त्युक्तम्, एवमेव क्रियायामित्यर्थकत्वेनापि "कारके" इति सूत्रं व्याख्यातम् । तथा च सप्तम्यप्युपपन्ना तथाऽप्यकथितशब्दस्याप्रधानपरत्वे तद्व्याख्यानम् । नचाप्रधानत्वं सिद्धान्ते स्थितम् । एतेन क्रियायामित्यर्थकत्वेन व्याख्यानं भाष्यासंमतमिति निश्ची-यते । तथा च षष्ठ्यास्तु सर्वतः कारकत्वाभाव एव सूचितः । एवञ्च परमतेनापि साम-ञ्जस्यं सुतरामत्र संपद्यतेति न कश्चित्तन्मतेऽपि दोषदानावसर इति दिक् ।

नचैवमपि कारकशब्दस्य कर्तृपर्यायत्वेन "कारकं करणम्" इत्यादि विरुद्धम्, "कारकं कर्त्ता" इति च पुनरुक्तं स्यादिति वाच्यम्, "निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवा-स्ति कारके । व्यापारभेदापेक्षायां करणादित्वसंग्रहः॥" इति हरिणैव समाधानात् ।

कमन्थ इत्यर्थः, आदिना कर्त्रादिपरिग्रहः । "कः कारकपदार्थः ?" इति शिष्यजिज्ञासानिवृत्तये परमतनिराकरणपूर्वकस्वमतसिद्धलक्षणमभिधित्सुः प्रथमतो वयाकरणमतसिद्धलक्षणमुपन्यस्य दूषयति—तत्र क्रियेति । तत्र—कारकादौ. घटकत्वं सप्तम्यर्थः । क्रियेति । क्रिया—धात्वर्थः, "क्रिया धात्वर्थ उच्यते" इति शाब्दिकस्मरणात् , तन्निमित्तत्वं—तत्कारणत्वमित्यर्थः । ग्रामं गच्छतीत्यादौ गमिधात्वर्थसंयोगावच्छिन्नक्रियायाः कारणत्वाभावेऽपि धात्वर्थताऽवच्छेदकीभूतसंयोगकारणत्वमादाय ग्रामादेः कारकत्वं, तादृशक्रियायां संयोगकारणत्वसत्त्वेऽपि क्रियान्यत्वेन निवेशनात् न क्रियायां कारकलक्षणातिव्याप्तिरित्यवधेयम्(१) । केचित्तु(२) संयोगादिः क्रिया च उभयमेव गम्यादिधात्वर्थः । तथाच, संयोगरूपधात्वर्थकारणत्वमादाय यथाश्रुतमेव सम्यगित्याहुः ॥ १ ॥

दृष्टान्तवाक्यम्—

सम्प्रदानादेरनुमतिप्रकाशनद्वारे(३)व तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन सम्बन्धिनि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तेः ॥ २ ॥

नन्वत्र क्रियाकारणत्वं साक्षात्परम्परासाधारणप्रयोजकत्वमेव वाच्यम्, अन्यथा सम्प्रदानापादानादावव्याप्तिः; तथा च चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तिरित्यत आह—सम्प्रदानादेरिति । आदिना अपादानादिपरिग्रहः । अनुमतिः—इच्छा, प्रकाशनं = ज्ञापनं, तद्द्वारा सम्प्रदानादेः क्रियानिमित्तत्वेनेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वेन सम्बन्धिनि चैत्रादावतिव्याप्तिरित्यन्वयः । कुत्र प्रयोगे चैत्रादावतिव्याप्तिरित्याकाङ्क्षायामाह—चैत्रस्य तण्डुलमित्यादि । तुभ्यं ददानीत्युक्ते ब्राह्मणो यदि ददस्वेति ब्रूयात् , तेन

(१) एतावता प्रबन्धेन सकर्मकस्थले "फलव्यापारयोर्धातु"रिति विशिष्टशक्तिमन्वानानां कौण्डभट्टाद्याचार्यचरणानां मतमनुसृत्य व्याख्यातम् । युक्तञ्चैवमेव, अन्यथा पृथक्शक्तिस्वीकारे शाब्दसामग्र्याः प्रतिबन्धकतायां विशिष्टविषयकोपस्थितिस्थाने उपस्थितिद्वयकल्पने गौरवं स्यात् ।

(२) खण्डशक्तिवादमतमेव प्रकटयति 'केचित्त्वि'त्यादिना ।

(३) "अनुमतिप्रकाशनद्वारे" तत्तूपलक्षणम् । तेनापादानादिकस्यापि संग्रहस्तथा चापादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रियानिमित्तत्वं बोध्यम् ।

ब्राह्मणस्येच्छामनुमाय दानेऽनिष्टसाधनताज्ञाननिवृत्त्या इष्टसाधनताज्ञानाद्दाननिष्पत्तिरिति अनुमतिप्रकाशनद्वारा ब्राह्मणस्य दानप्रयोजकत्वं, तण्डुलोत्पत्त्यनुकूलव्यापारादिरूपतण्डुलसम्पादनद्वारा चैत्रादेरपि पाकनिमित्तत्वमस्त्येवेति भावः । एवमपादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रियानिमित्तत्वं बोद्धव्यम् । (१) अतिव्याप्तेरित्युपलक्षणं, "गडि वदनैकदेशे" इति गणोक्ते गण्डति कपोलमित्यादौ वदनैकदेशस्य धात्वर्थतया तादात्म्यस्याख्यातार्थतया च वदनैकदेशतादात्म्यवान् गण्ड इति शाब्दबोधो जायते, इति वदनैकदेशरूपक्रियाकर्त्तरि गण्डे तादृशक्रियाप्रयोजकत्वासम्भवेनाव्याप्तिः, (२) एवं गगनं द्रव्यं भवतीत्यादौ द्रव्यतादात्म्यस्यैव भुवः शक्यतया तादृशक्रियाकर्त्तरि गगने तादृशक्रियाया अप्रयोजकत्वेनाव्याप्तिरपि बोध्या ॥ २ ॥

सिद्धान्तवाक्यम्—

किन्तु, "विभक्त्यर्थद्वारा क्रियाऽन्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्" । क्रियानिमित्तत्वसहितं मुख्यमिति । स्तोकं पचतीत्यादौ क्रियाविशेषणेऽतिव्याप्तिवारणाय विभक्त्यर्थद्वारेति ॥ ३ ॥

स्वमतसिद्धलक्षणमाह—विभक्त्यर्थद्वारेति । क्रियाविषयतानिरूपितविभक्त्यर्थविषयतानिरूपितविषयताऽऽश्रयत्वमित्यर्थः । भाक्तं=गौणं, ग्रामं गच्छति, घटं

---

( १ ) अयम्भावः, "क्रियानिमित्तत्वं कारकत्व"मिति स्वीकारे "गण्डति कपोल"मित्यादौ वदनैकदेशस्यैव धात्वर्थत्वेन कपोलवाक्यार्थत्वेन समभविलक्षणत्वादुक्तकारकत्वस्याव्याप्तिः स्पष्टैव । मन्मते तु वक्ष्यमाण "विभक्त्यर्थद्वारे" त्यादि स्वीकारेण कपोले तत्त्वमस्त्येवेति न दोष इति बोध्यम् ।

( २ ) अत्र भूधातोस्तादात्म्य एवार्थः,तथा च गगनं द्रव्यतादात्म्यवदित्येव बोधो जायते । एवञ्च गगनात्मकस्य गगननिष्ठद्रव्यतादात्म्यस्य द्रव्यभेदात्यन्ताभावात्मकस्य वा तस्य नित्यतया तत्प्रयोजकत्वस्य गगने असम्भवेन तत्र प्रकृतलक्षणाव्याप्तिरिति भावः । अत्रेदं बोध्यम्, ननु स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्याभ्यां स्वविशिष्टान्यधर्मवत्त्वस्य तत्र भूधात्वर्थतावच्छेदकत्वेन गगने द्रव्यतादात्म्यस्य शब्दरूपतया तत्प्रयोजकत्वस्य तत्समवायिकारणे गगने निराबाधतया नोक्तदोषावसर इति चेन्न, गगने द्रव्यतादात्म्यस्य महाप्रलयेऽपि उपपादनाय गगननिष्ठपरिमाणस्यव गगननिष्ठद्रव्यतादात्म्यरूपताया आवश्यकत्वेन नित्यस्य तस्य गगने प्रयोजकत्वसम्भावनाया दूरपरिहृतत्वादिति दिक् ।

जानातीत्यादौ मुख्यं ग्रामादि, भाक्तं घटादि, तत्साधारणमित्यर्थः । किं मुख्यमित्याकाङ्क्षायामाह—**क्रियेति** । तथाच, क्रियानिमित्तत्वे सति विभक्त्यर्थद्वारा क्रियाऽन्वयित्वं, मुख्यकारकत्वं बोध्यम्; इदमुपलक्षणं, क्रियाया अनिमित्तत्वे सति विभक्त्यर्थद्वारा क्रियाऽन्वयित्वं भाक्तकारकत्वम् । उभयत्र क्रियानिमित्तत्वं साक्षात्परम्परासाधारणं प्रयोजकत्वरूपं बोध्यम् । ननु क्रियाविषयतानिरूपितविषयतानिरूपितविषयताश्रयत्वमेव लक्षणमुच्यतां, किं क्रियाविषयतानिरूपितविभक्त्यर्थविषयतानिवेशेन ? इत्यत आह—**स्तोकमित्यादि** । यद्यपि पचतीत्यादितः पाकानुकूलकृत्यादेर्बोधात् पाकविषयतानिरूपितानुकूलत्वविषयतानिरूपितविषयत्वाश्रयत्वस्य कृत्यादावपि सत्त्वात् तत्रातिव्याप्तिवारकतया विभक्त्यर्थनिवेशप्रयोजनं सम्भवति, तथाऽपि तादृशविषयताऽऽश्रयत्वे सति नामार्थत्वनिवेशेनापि तद्वारणसम्भवात् तत्परित्याग इत्यवधेयम् । न च विशेषणविभक्तेरभेदार्थकत्वमते विभक्त्यर्थनिवेशेनापि नातिव्याप्तिवारणसम्भव इति वाच्यम्; विशेषणविभक्तेरभेदार्थकत्वमतेऽपि क्रियाविशेषणोत्तरविभक्तेरभेदार्थकत्वविरहात्; किन्तु साधुत्वमात्रसम्पादकत्वमेव; अन्यथा क्रियाविशेषणस्य कुत्र वा द्वितीया, कुत्र वा तृतीया इत्यस्य विनिगमकाभावप्रसङ्गात् । इत्थञ्च यत्र विभक्त्यर्थस्य प्रकारविधया भानं, तत्र स्तोकेन पचति, अतिशयेन मूत्रयतीत्यादौ तृतीया, यत्र न भानं, तत्रैव स्तोकं पचति, अतिशयं मूत्रयतीत्यादौ द्वितीयेति नानध्यवसायापत्तिरिति । विशेषणविभक्तेरभेदार्थकत्वमतेऽपि अभेदातिरिक्तत्वस्य विभक्त्यर्थे निवेशान्नातिव्याप्तिः । (१)इष्यत एव वा (२) तस्य कारकत्वं मृदुन्यावित्यादौ यकारानुपपत्तेः, कारकपदात् परस्यैव तस्य विधानात् । पचतीत्यादौ आख्यातार्थकृत्यादावतिव्याप्तिवारणाय विभक्त्यर्थोपादानमिति केचिद्वदन्ति, तच्चिन्त्यम् ॥ ३ ॥

लक्ष्ये समन्वयप्रकारवाक्यम्—

चैत्रस्य पचतीत्यादौ सम्बन्धित्वं न पाकेऽन्वेति षष्ठ्या नामार्थसा-

---

( १ ) एतद्विशेषव्याख्यानञ्च व्युत्पत्तिवादे द्रष्टव्यम् ।

( २ ) अयम्भावः, "तस्य कारकत्वम्" अर्थात् विशेषणविभक्तेः कारकत्वमिष्यत एव, अन्यथा मृदुन्यावित्यादौ मृदुमधुरं यथास्यात्तथा नयत इति मृदुनीशब्दे "गतिकारकेतरपूर्वपदस्य यण् नेष्यते" इति वार्त्तिकानुमत्या "एरनेकाचोऽसंयोगपूर्वस्य" (पा० सू० ६-३-८२) इति शास्त्रस्य गतिकारकपदेतरत्वेन यणभावाद् यकारानुपपत्तिः स्यादेवेति बोध्यम् ।

काङ्क्षतया क्रियाया अपि कर्म्मादिसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात्, किन्तु तण्डुलमित्यादिपदाध्याहारेणैव चैत्रस्य तण्डुलं पचतीत्येवान्वयबोधः ॥ ४ ॥

ननु चैत्रस्य पचतीत्यादौ तण्डुलादिपदाभावात् अगत्या षष्ठ्यन्तार्थस्य पाकेऽन्वयो वाच्यः, तथाच सम्बन्धिनश्चैत्रस्यापि कारकत्वापत्तेः स्वमते तादवस्थ्यमित्यत आह,—चैत्रस्येति । न पाकेऽन्वेति । चैत्रस्य सम्बन्धित्वस्य पाकान्वयासम्भव एवेत्यर्थः । कुत इत्याकाङ्क्षायामाह—षष्ठ्या इति । नामार्थसाकाङ्क्षतयेति । नामार्थधर्मिकस्वार्थबोधकतयेत्यर्थः । परस्पराकाङ्क्षाविरहादिति । परस्परान्वयबोधौपयिकाकाङ्क्षाविरहादित्यर्थः । यद्येवं, तदा तादृशनिरूप्य–निरूपकभावापन्न–विलक्षणैकविषयता–शालिबोधस्यानुभवसिद्धतया तस्यापलापप्रसङ्गः, प्रसङ्गो वा तत्र तादृशविलक्षणबोधौपयिकाकाङ्क्षादिमत्त्वस्य, इत्यत आह—किन्त्विति । पदाध्याहारेणैवेति । तथाच अध्याहाराभावे तत्राबोधकत्वमिष्टमेवेति भावः ॥४॥

लक्ष्ये समन्वयप्रकारवाक्यम्—

ओदनस्य भोक्ता, मैत्रस्य पाक इत्यादौ कर्म्मत्वकर्त्तृत्वार्थककारकविभक्तिरेव, "कर्त्तृकर्म्मणोः कृति" इत्यनेन तद्विधानात् । अत एव "सम्बन्धस्य कारकत्वं नास्ति क्रियायोगाभावात्" इति शाब्दिकाः ॥ ५ ॥

ननु ओदनस्य भोक्ता, मैत्रस्य पाक इत्यादौ कर्मत्वादिरूपविभक्त्यर्थद्वारा भोजनादिरूपक्रियान्वयिन ओदनादेः कारकत्वं स्यादित्यत इष्टापत्तिमाह—ओदनस्येति । कर्मत्वकर्त्तृत्वादिभेदेनोदाहरणद्वयम् । तस्य कारकविभक्तित्वे प्रमाणमाह—कर्त्तृकर्मणोरिति । अत एव—सम्बन्धार्थकषष्ठ्याः कारकविभक्तित्वाभावादेव । सम्बन्धस्य—सम्बन्धबोधकषष्ठ्याः, कारकत्वं—कारकविभक्तित्वं, कारकोत्तरविभक्तित्वमिति यावत् । क्रियायोगाभावात्—षष्ठीविभक्त्यर्थसम्बन्धद्वारा क्रियाविषयतानिरूपितविभक्त्यर्थविषयतानिरूपितविषयताऽऽश्रयत्वस्य सम्बन्धार्थकषष्ठीप्रकृत्यर्थे विरहादित्यर्थः ॥ ५ ॥

आक्षेपपुरःसरनिराकरणवाक्यम्—

यदि "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजै"रित्यादिप्रयोगे विनाऽपि नामाऽध्याहारं धात्वर्थे षष्ठ्यर्थः सम्बन्धोऽन्वीयते तदा "कर्त्तृत्वकर्मत्वादिषट्कान्यतमत्वे सति क्रियाऽन्वयित्वं कारकत्वमि"ति तत्त्वम् ॥ ६ ॥

यदि चेति । रोगोपशमो यदि प्रकृते धात्वर्थः, तदाऽध्याहारं विनैव षष्ठ्यर्थाधेयत्वस्य धात्वर्थैकदेशे रोगेऽन्वयादतिव्याप्तिः; यद्युपशम एव धात्वर्थस्तदा रोगमिति पदाध्याहारेणैवान्वयबोध इति क्रियाऽन्वयित्वाभावान्नातिव्याप्तिरित्यतो यदि चेत्युक्तम् । न च क्रिया धात्वर्थः, धात्वर्थत्वञ्च न धातुप्रयोज्यप्रतीतिविषयताऽऽश्रयत्वम्, अपि तु "धातुपदजन्योपस्थितिमुख्यविशेष्यत्वम्" (१)तथाच षष्ठ्यर्थाधेयत्वस्य प्रकृते रोगेऽन्वयान्नातिव्याप्तिरिति वाच्यम् । घटं निरूपयतीत्यादौ तादृशनिरूपणरूपधात्वर्थे ज्ञानानुकूलव्यापारे विभक्त्यर्थद्वारा घटादेरनन्वयाद्घटादावव्याप्तेः; इदमुपलक्षणं, (२) "नारदाय रोचते कलहः" इत्यादौ नारदादेरपि कारकत्वापत्तिः, तेषामपि विभक्त्यर्थद्वारा क्रियाऽन्वयित्वादित्यवधेयम् । कर्त्तृत्वकर्मत्वादीति । आदिना करणत्वादिपरिग्रहः । कर्त्तृत्वाद्यन्यतमद्वारा तत्क्रियान्वयित्वं तत्क्रियाकारकत्वमित्यर्थः ॥ ६ ॥

---

आक्षेपवाक्यम्—

## कर्त्तृत्वविवेचनम्(३)—

तत्र "क्रियाऽश्रयत्वं कर्त्तृत्वम्" इति वैयाकरणाः । तेषामयमाशयः—

---

(१) मुख्यविशेष्यत्वञ्च प्रकारत्वानवच्छिन्नविशेष्यत्वम्, प्रकारताभिन्नविशेष्यत्वं वा, तादृशी विशेष्यता च "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादि वाक्ये रोगनिवृत्त्यनुकूलव्यापार एव न तु रोगे, तन्निष्ठायाः रोगत्वप्रकारतानिरूपितविशेष्यतायाः, निवृत्यादिनिष्ठविशेष्यतानिरूपितप्रकारतयाऽवच्छिन्नत्वाद् अभिन्नत्वाद्वेति बोध्यम् ।

(२) अयं भावः, परमतोक्तकारकत्वलक्षणस्वीकारे "गगनं द्रव्यं भवती"त्यादावव्याप्तिरूपकतादूषणन्तूक्तमेव, इदानीमतिव्याप्तिरूपकत्वं दूषणं लक्षयति "नारदाये"ति । अत्र "रुच्यर्थानां प्रीयमाणः" पा० सू० १-४-३३ इत्यनेन धात्वर्थत्वं विशिष्य चतुर्थीविधानान्न तस्य कारकविभक्तित्वमपि तु उपपदविभक्तित्वमेवेति सर्वैः स्वीकृतम् । परन्त्विदानीन्तनलक्षणस्वीकारे तु नारदस्यापि कारकविभक्तित्वापत्तिः स्यादिति बोध्यम् । एतच्छाब्दबोधस्त्वेवं रीत्यावगन्तव्यः, नारदाधिकरणकप्रीत्यनुकूलव्यापाराश्रयः कलह इत्यादिप्रकारेण ।

अत्र धेयपदवीजन्तु पदनिमित्तकविभक्तीतरविभक्त्यर्थद्वारेत्यर्थसमर्थनेन न दोषावह इति ज्ञेयम् ।

(३) अत्रेदं ध्येयम्—यः करोति स कर्त्तेति शाब्दिकानां मते स्थितम् ।

यद्धातूत्तराख्यातेन यद्धात्वर्थान्वितयादृशधर्मवत्त्वं बोध्यते, तादृशधर्मवत्त्वमेव तत्क्रियाकर्त्तृत्वम् ॥ ७ ॥

किं कर्त्तृत्वमित्याकाङ्क्षायां कर्त्तृत्वं निरूपयितुं प्रथमतो वैयाकरणमतमुपन्यस्य दूषयति—तत्रेति । तत्र = तेषु मध्ये, कर्त्तृत्वाद्यन्यतममध्ये इत्यर्थः, निर्द्धारणे सप्तमीयम् । निर्द्धारणस्थले उद्देश्यभिन्नसामान्यधर्मावच्छिन्ने विधेयव्यवच्छेदबोधकतया प्रकृते क्रियाश्रयत्वभिन्नकर्त्तृत्वाद्यन्यतमं कर्त्तृत्वपदप्रतिपाद्यत्वाभाववदित्यन्वयबोधः । गम्यादिधातुस्थले गमनादिक्रियाश्रयत्वस्य कर्त्तरि सत्त्वेऽपि देवदत्तस्त्यजतीत्यादिप्रयोगकाले त्यागकर्त्तरि देवदत्ते गमनकर्त्तृत्वापत्तिरित्यत आह—तेषामिति । वैयाकरणानामित्यर्थः । यद्धातूत्तराख्यातेनेति—यद्धातूत्तरत्वघटिताख्यातत्वावान्तरधर्मप्रकारकनिश्चयेनेत्यर्थः । तथाच, यगादिघटितधर्मभिन्नयद्धातूत्तरत्वघटिताख्यातत्वावान्तरयत्किञ्चिद्धर्म्मप्रकारकनिश्चयत्वव्यापकजनकतानिरूपित—जन्यतावच्छेदक—तद्धात्वर्थविषयतानिरूपितशाब्दधीविषयताविशिष्टधर्मवत्त्वं तद्धातुकर्त्तृत्वं पर्यवसितम्, नातो गच्छतीत्यादिवाक्यजन्यशाब्दाभावदशायां त्यागकर्त्तरि गमनकर्त्तृत्वप्रसङ्गः । यद्धातूत्तरत्वघटितत्वानुपादाने आख्यातत्वावान्तरधर्मतिप्त्वादिप्रकारकनिश्चयत्वस्य गम्याद्युत्तरत्वेनाननुसन्धीयमानतिप्त्वादिप्रकारकनिश्चयसाधारणतया तत्र गम्यादिधात्वर्थविषयता—निरूपितकृतिविषयताशालि—शाब्दबोधजनकताया असत्त्वेन तादृशनिश्चयत्वव्यापकत्वाभावादसम्भवः स्यादतस्तादृशोक्तिः । स्वरूपसम्बन्धरूपयद्धातूत्तरत्वघटिताख्यातत्वावान्तरयत्किञ्चिद्धर्मप्रकारकनिश्चयत्वावच्छिन्नजनकतानिवेशेऽप्यसम्भवः, भ्रमसाधारण्यानुरोधेन गमिधातूत्तरतिप्त्वादिप्रकारकनिश्चयत्वेन हेतुत्वासम्भवात्, किन्तु गत्वावच्छिन्नविषयतानिरूपित—अत्वावच्छिन्नविषयतानिरूपितेत्यादिक्रमेणैव; अतस्तादृशनिश्चयत्वव्याप-

---

कर्ता त्रिधा मतो लोके स्वतन्त्रः प्रेरकस्तथा ।
कर्मकर्त्ता च सोऽनुक्त उक्तोऽपि प्रत्ययैर्भवेत् ॥
कर्त्रादिविहितैरुक्तं कर्त्रादि स्यात् तिङादिभिः ।
गोविन्दं सेवते साधुः साधुना सेव्यते हरिः ॥
साधुना रक्षितः कृष्णः साधुः कृष्णेन रक्षितः । तार्क्ष्यं आरूढकृष्णोऽयं श्रेष्ठोऽयं मधुसूदनः ।
क्वचित् कारकवत् कर्त्ता हेतुप्रभृतिके बुधैः । पुण्यानि सखि कृष्णेन गोपानाममितान्यहो ॥
तथाऽपि—सम्बन्धः कारकाद्भिन्नो यद्यपि स्यात्तथाऽपि सः ।
उक्तो भवेत् समासेन दृष्टः पीताम्बरो हरिः ॥

कत्वनिवेशः । तादृशनिश्चयनिष्ठजनकतानिवेशे 'गम्यते, गच्छतो'इत्यादिवाक्यद्वय-विषयक-समूहालम्बनतादृशनिश्चयनिष्ठां 'गम्यते' इत्याद्यानुपूर्व्वीप्रकारकनिश्चयत्वा-वच्छिन्नजनकतामादाय ग्रामादावपि गम्यादिकर्त्तृत्वापत्तिरतस्तत्परित्यागः । यद्धातू-त्तरत्वघटितयत्किञ्चिद्धर्मप्रकारकनिश्चयत्वेनेत्युक्तौ 'गमनीय' इत्याद्यानुपूर्वीज्ञानमादाय ग्रामे गमनकर्त्तृत्वापत्तिः, अतो यत्किञ्चिद्धर्मे आख्यातत्वावान्तरत्वनिवेशः । अन्यत् सुधीभिरूह्यम् । अथ 'देवदत्तेन गम्यते' इत्यादिप्रयोगकाले देवदत्तस्य गमिधात्वर्थ-कर्त्तृत्वानुपपत्तिः; तथाहि, गमिधात्वर्थप्रकारतानिरूपितकृतिविशेष्यताया यगाद्यस-मभिव्याहृताख्यातज्ञानजन्यतावच्छेदकतया गमिधात्वर्थविशेष्यतानिरूपितकृतिप्रका-रतायास्तज्जन्यतानवच्छेदकत्वेन तादृशाख्यातज्ञानजन्यतावच्छेदक-गमिधात्वर्थ-विषयतानिरूपित-विषयता—विशिष्टधर्मवत्त्वाभावादिति चेन्न, वैयाकरणमते 'देवदत्तो गच्छती'त्यादौ देवदत्तकर्त्तृक-गमनमित्याकारकक्रियामुख्यविशेष्यकबोध-स्यैवोत्पत्तेः; अत एव "क्रियाप्रधानमाख्यातम्" इति शाब्दिकाः स्मरन्ति । यद्धा-त्वर्थविषयतानिरूपितयन्निष्ठविषयत्वं तादृशाख्यातज्ञानजन्यतावच्छेदकं तद्धात्वर्थवि-षयतानिरूपितशाब्दबोधविषयताश्रयतद्धर्मवत्त्वमिति यथाश्रुतविवक्षया नानुपपत्ति-रित्यपि केचित् । यगादीत्यादिना इचादिपरिग्रहः । **तादृशधर्मवत्त्वं**—तद्धा-त्वर्थविषयतानिरूपितशाब्दबोधीय-विषयताश्रयतद्धर्म्मवत्त्वमित्यर्थः । समानाकार-प्रत्यक्षदशायां कर्त्तृत्ववारणाय विषयतायां शाब्दबोधीयत्वनिवेशः ॥ ७ ॥

परमतस्य लक्ष्ये समन्वयप्रकारवाक्यम्—

**एवञ्च पचतीत्यादौ पाकानुकूलव्यापारवत्त्वं, जानातीत्यादावाश्रयत्वं, नश्यतीत्यादौ प्रतियोगित्वं तत्तत्क्रियानिरूपितत्वं तत्तत्क्रियाकर्त्तृत्वम् ॥८॥**

तत्र क्रियाकर्त्तृत्वं विशिष्य दर्शयति—**एवञ्चेति** । केचित्तु यथाश्रुततत्तत्क्रियाश्र-यत्वस्य कर्त्तृत्वरूपत्वे जानातीत्यादावेव लक्षणसमन्वयः, 'चैत्रस्तण्डुलं पचति, घटो नश्यती'त्यादौ कर्त्तरि चैत्रघटादौ पाकनाशाश्रयत्वाभावादव्याप्तिरेव तदाश्रये तण्डुल-कपालादावतिव्याप्तिरिति भङ्ग्या प्रतिपादितमिति वदन्ति, तन्न; क्रियाभेदेन कर्त्तृ-लक्षणस्य भिन्नतया पाकादिक्रियास्थले अनुकूलव्यापारवत्त्वसम्बन्धेन, नाशादिस्थले प्रतियोगित्वसम्बन्धेन विवक्षणादव्याप्त्यतिव्याप्त्योरनवकाशादिति ॥ ८ ॥

अत्रापि तादृशमेव वाक्यम्—

**यगाद्यसमभिव्याहृतेनेति विशेषणात् पच्यते तण्डुल इत्यादौ पाक-**

जन्यफलाश्रयत्वेन तण्डुलादेर्बोधान्न तस्य कर्त्तृत्वम् ॥ ९ ॥

यगाद्यसमभिव्याहृतेनेत्यस्य व्यावृत्तिमाह—पच्यते तण्डुल इत्यादि । फलाश्रयत्वेनेति । फलं विक्लित्तिरूपं, सा च विलक्षणावयवसंयोगः ॥ ९ ॥

अत्रापि तादृशमेववाक्यम्—

काष्ठैः स्थाल्यामोदनं पचतीत्यादौ करणाधिकरणकर्मणां क्रियाऽन्वित-करणत्वादिधर्मवत्त्वेऽपि स धर्मो नाख्यातप्रतिपाद्यः । यदा तु तत्तात्पर्येणाख्यातं प्रयुज्यते, तदा काष्ठं पचतीत्यादौ तेषां कर्त्तृत्वमिष्टमेव ॥१०॥

आख्यातान्तपदव्यावृत्तिमाह—काष्ठैः स्थाल्यामिति । इदमुपलक्षणम्; अस्मदुक्तरीत्याऽपि व्यावृत्तिर्बोध्या । स धर्मो नाख्यातप्रतिपाद्यः किन्तु तृतीयासप्तम्यादिरूपस्यादिप्रतिपाद्य एवेत्यर्थः । तत्तात्पर्येण—पाकान्वितकरणत्वादिबोधतात्पर्येणेत्यर्थः । तदा = प्रयोगकाले, तेषां = करणाधिकरणकर्मणां, कर्त्तृत्वमिष्टमेवेति । अत एव "विवक्षावशात् कारकाणि भवन्ति" इति शाब्दिका वर्णयन्ति । तत्र विवक्षावशात्=प्रयोगवशादित्यर्थः ॥ १० ॥

अत्रापि तादृशमेव वाक्यम् ।

तथा पच्यते ओदनः स्वयमेवेत्यादौ कर्मकर्त्तरि ओदनादेः कर्मणोऽपि कर्त्तृत्वं, तत्र हि स्ववृत्तिव्यापारजन्यपाकजन्यफलशाल्योदन इति शाब्दबोधः, ओदनपदोत्तरप्रथमाया व्यापारो लक्षणयाऽर्थः । यद्वा व्यापारसामान्ये शक्तस्याख्यातस्यार्थः ॥ ११ ॥

कर्मकर्त्तरीति । प्रत्ययस्थले इति शेषः । स्ववृत्तीति । स्वम्—ओदनः, तद्वृत्तिव्यापारः—तण्डुलावयवाभिसंयोगः, एतस्यौदनवृत्तित्वञ्च स्वाश्रयारभ्यत्वसम्बन्धेन, पाकः—विक्लित्त्यनुकूलव्यापारः स च तण्डुलावयवक्रिया विक्लित्तिश्च शिथिलाख्यतण्डुलावयवसंयोगः । व्यापारार्थकप्रथमायाः प्रायशः प्रयोगाभावादाधुनिकलक्षणापत्तेराह—यद्वेति । आख्यातस्यैवार्थं इति, व्यापार इति पूर्वेणान्वयः ॥ ११ ॥

अत्रापि तादृशमेव वाक्यम्—

व्युत्पत्तिवैचित्र्याच्चात्र यगादिसमभिव्याहृताख्यातार्थव्यापारे प्रथमान्तार्थस्य विशेषणतयाऽन्वयः । तत्राख्यातस्य व्यापारवाचित्वादोदनान्वितताहशव्यापारस्य यगाद्यसमभिव्याहृताख्याताप्रतिपाद्यत्वादोदनस्य यगाद्यसमभिव्याहृताख्यातप्रतिपाद्यधात्वर्थान्वितव्यापारवत्त्वरूपकर्त्तृत्वं नि

राबाधमेव, ओदनः स्वं पचतीत्यादिप्रयोगस्यासाधुतयाऽभावेऽपि तादृशव्यापारे तज्जन्यप्रतिपत्तिविषयत्वयोग्यताऽनपायादिति ॥ १२ ॥

नन्वाख्यातार्थव्यापारादेः प्रथमान्तार्थविशेषणतया धात्वर्थविशेष्यतया चान्वयनियमात् तादृशान्वयबोध एवाप्रामाणिक इत्यत आह—व्युत्पत्तिवैचित्र्यादिति । आकाङ्क्षावैचित्र्यादित्यर्थः, तथाच, यादृशाकाङ्क्षा तादृशबोध एव कारणमिति भावः(१) । तत्राख्यातस्य = कर्तृविहिताख्यातस्य, तिबादेरिति यावत् । नन्वसाधुत्वनिश्चयात् तादृशप्रयोगाभावेन तज्जन्यशाब्दबोधाभावाज्जन्यत्वाव्यवहितोत्तरत्वोभयसम्बन्धेन यगाद्यसमभिव्याहृत—तादृशाख्यात—ज्ञानविशिष्ट—ज्ञानीयविषयतावत्त्वस्य तादृशव्यापारेऽसत्त्वान्नाव्याप्त्युद्धार इत्यत आह—ओदनः स्वं पचतीत्यादि । स्वरूपयोग्यताया इति, तथाच साधुत्वनिश्चयदशायाम्—ओदनः स्वं पचतीति कदाचित् प्रयोगसम्भवात् स्ववृत्तिव्यापारजन्यपाकजन्यफलशाल्योदन इति बोधस्यानुभवसिद्धतया पाकविषयतानिरूपितव्यापारविषयताया अगत्या यगाद्यसमभिव्याहृततिप्त्वादिप्रकारकनिश्चयजन्यतावच्छेदकताया आवश्यकत्वेन विवक्षिततादृशज्ञानजन्यतावच्छेदकविषयतावत्त्वं 'पच्यते ओदनः स्वयमेवे'ति प्रयोगकाले तादृशप्रयोगाभावेऽपि तादृशव्यापारेऽबाधितमेव, तादृशज्ञानविशिष्टज्ञानविषयत्वनिवेशे प्रयोजनाभाव इति भावः ॥ १२ ॥

स्वमतस्थापनप्रकारवाक्यम्—

पाचयतीत्यादौ तु पाकानुकूलव्यापारो णिजन्तार्थः, तदनुकूलव्यापारश्चाख्यातस्तदाश्रय एव कर्त्तेति । "स्वतन्त्रः कर्त्ता" १-४-५४ इति पाणिनिसूत्रमप्येतत्परतयैव व्याख्येयमिति, तन्न, अचेतनेऽभियुक्तानां स्वरसतः कर्तृपदाप्रयोगात् ॥ १३ ॥

इनन्तधातुस्थले लक्षणं सङ्गमयति—पाचयतीत्यादि । पाकः पचेरर्थः, इनर्थश्च व्यापारः, तदन्वितव्यापार आख्यातार्थः ; एवञ्च 'चैत्रो मैत्रेण पाचयती'त्यादौ पाकानुकूलमैत्रनिष्ठव्यापारस्तदीयचेष्टा तत्कृतिर्वा, तदनुकूलो यो व्यापारः 'त्वं पच'

---

(१) अत्र आकाङ्क्षा च आनुपूर्वीरूपा, एवञ्च "पच्यते ओदनः स्वयमेवे"त्यादौ यग्विकरणोत्तरतिङन्तधातूत्तरप्रथमान्तकर्तृकर्मपदोत्तरस्वयमेवेत्यर्थकपदत्वरूपा, अथवा पकारोत्तरअत्वादिविशिष्टचकारोत्तरायत्वादिरूपेति बोध्यम् ।

इत्यादि शब्दप्रयोगरूपस्तद्वान् चैत्र इत्याकारकस्तत्र शाब्दबोधः । ननु "स्वतन्त्रः कर्त्ता" इति पाणिनिसूत्रविरोध इत्यत आह—स्वतन्त्र इति । स्वरसतः—लक्षणां विनेत्यर्थः, अनुपपत्तिज्ञानं विनेति केचित्, फलतो न विशेषः, लक्षणया तु तादृशप्रयोगो भवत्येवेति भावः ॥ १३ ॥

मतान्तरखण्डनपुरःसरं स्वमतस्थापनप्रकारवाक्यम्—

यत्तु "कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्त्तृत्वम्" इति । सत्यन्ताच्च छेद्यसंयोगादिरूपव्यापारजनके कुठारादौ नातिव्याप्तिरित्यपरे (१) । तदप्यसत्, ईश्वराप्रयोज्यानां संसारिणां तत्तत् क्रियास्वकर्त्तृतापत्तेः ॥ १४ ॥

मतान्तरमाह—कारकान्तरेति । स्वभिन्नकारकेत्यर्थः, स्वं—लक्ष्यत्वेनाभिमतं, सत्यन्तस्य निष्कृष्टार्थं स्वयमेव व्यक्तीकरिष्यति, विशेष्यदलार्थस्तु स्वभिन्नकारकजन्यतत्कार्यानुकूलव्यापारजनकत्वमिति । सत्यन्तव्यावृत्तिमाह—छेद्येति । जनकान्तेन विशेष्यदल-सत्त्वमाविष्कृतम् । नातिव्याप्तिरिति । तथाच कुठारभिन्नं यत् कर्त्तृकारकं, तत्प्रयोज्यत्वात् कुठारादौ नातिव्याप्तिरिति भावः । यद्यपि कुठारस्य न कर्त्तृप्रयोज्यत्वं तथाऽपि तन्निष्ठव्यापारे कर्त्तृप्रयोज्यत्वस्य सत्त्वात् तादृशव्यापारविशिष्टकुठारादावपि तत्प्रयोज्यत्वे यथाश्रुतेऽप्युपपादनीयमिति । यथाश्रुतसत्यन्तार्थे दोषमाह—ईश्वरेति । तथाच कर्त्तृभिन्नो यः कारक-ईश्वरः, संसारिणां—देहिनां, तत्प्रयोज्यतयाऽव्याप्तिः, अत्र देहांशे प्रयोज्यतामादाय देहिनां प्रयोज्यत्वं बोध्यम्, ईश्वरस्य जन्यमात्रं, प्रत्येव जनकत्वादिति भावः ॥ १४ ॥

स्वमतस्थापनप्रकारवाक्यम्—

अप्रयोज्यत्वञ्च यदि फलानुकूलतज्जन्यव्यापारानाश्रयत्वं, तदा दण्डादिजन्यसंयोगादिरूपव्यापारानाश्रयत्वात् कुलालादावव्याप्तिः, अन्यच्च दुर्वचमिति ॥ १५ ॥

---

(१) अयम्भावः, "देवदत्तः कुठारेण वृक्षं छिनत्ति" इत्यादिवाक्ये स्वं कुठारः, तद्भिन्नं कारकं वृक्षरूपं कर्म, तज्जन्यच्छेदनरूपकार्यानुकूलो यो वृक्षकुठारसंयोगरूपो व्यापारः, तज्जनकत्वं कुठारे वर्त्तत एवेत्यतिव्याप्तिः प्रसज्येत । सत्यन्तदलप्रदानात्तु छेद्यसंयोगादिरूपव्यापारजनके कुठारादौ कर्तृकारकप्रयोज्यत्वसत्त्वेन नातिव्याप्तिरिति बोध्यम् ।

निष्कृष्टार्थमाह—यदीति । फलानुकूलेति । तत्क्रियानुकूलस्वभिन्नकारकजन्यव्यापारानाश्रितत्वमित्यर्थः । यद्यपि कर्त्तृनिष्ठव्यापारे पूर्वोक्तेश्वरजन्यतामादाय दोषदानं सम्भवतीति तत्परित्यागो न विचारसहः, तथाऽपि स्वभिन्नकारकजन्यतायां जन्यत्वानवच्छिन्नत्वविशेषणात् ईश्वरजन्यत्ववारणसम्भवात् (१)दण्डादिजन्येत्युक्तम् ; अत्र स्वभिन्नकारकजन्यतत्कार्योत्पत्त्यनुकूलव्यापारानाश्रितत्वे सति स्वभिन्नकारकजन्यतत्क्रियानुकूलव्यापारजनकत्वं कर्त्तृत्वमिति फलितं, तत्र कर्त्तर्यतिव्याप्तिवारणाय व्यापारे जन्यान्तविशेषणं, कर्त्तृव्यापारे स्वात्मकर्त्तृव्यापारे कारकजन्यतयाऽव्याप्तिवारणाय स्वभिन्नेति कारकविशेषणं, स्वभिन्नजन्येत्युक्तौ कर्त्तृभिन्नादृष्टजन्यतया तद्दोषतादवस्थ्यमतः कारकेति, इति रीत्या तन्मते प्रतिपदव्यावृत्तिर्बोध्या (२) । कर्मत्वाद्यन्यतमशून्यत्वं सत्यन्तेन विवक्षणीयं विचक्षणीयञ्च

---

( १ ) अयम्भावः, जन्यत्वावच्छिन्नं प्रति ईश्वरः कारणमितिसिद्धान्तानुसरणे ईश्वरनिष्ठकारणतानिरूपितजन्यतायां जन्यत्वावच्छिन्नत्वसत्त्वेन जन्यत्वानवच्छिन्नत्वरूपविशेषणाभावाद् उक्तसिद्धान्तस्यादानासम्भवात् । अत्र स्वस्य स्वावच्छेदकत्वे परस्पराश्रयत्वप्रसङ्गाद् ईश्वरजन्यताया जन्यत्वानवच्छिन्नत्वविशेषणेन वारणमसम्भवितीति न शङ्कनीयम्, स्वरूपसम्बन्धविशेषरूपकार्यताऽवच्छेदकस्य प्रागभावप्रतियोगित्वरूपजन्यत्वसम्भवात् । तथा च 'कुलालो दण्डेन घटं करोती'त्यत्र दण्डनिष्ठकारणतानिरूपितजन्यता च घटत्वाद्यवच्छिन्ना न तु जन्यत्वावच्छिन्नेति, तदुपादानं सम्यगेवेति बोध्यम् ।

कर्तृत्वञ्च, स्वविशिष्टत्ववत्त्वम्, वैशिष्ट्यञ्च, स्वभिन्नत्वं, स्वजन्यतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकत्वोभयसम्बन्धेन ।

( २ ) अत्रेदं विज्ञेयम्, कारकान्तरस्य सत्यन्तदलेन क्रियायाश्च तत्तत्क्रियोत्पत्त्यनुकूलजनकत्वमात्रेण वारणसम्भवात्, विशेष्यदले व्यापारांशे जन्यान्तविशेषणं व्यर्थमिति न शङ्कनीयम्, स्वभिन्नकारकविशिष्टत्वं कर्त्तृत्वम्, वैशिष्ट्यञ्च, स्वजन्यतत्कार्योत्पत्त्यनुकूलव्यापारानाश्रितत्व, स्वजन्यतत्क्रियानुकूलव्यापारजनकत्वोभयसम्बन्धे, एव तस्यार्थस्य तात्पर्यस्वीकारात् । तथाच तस्य सकृदेव निवेशेन उभयथा प्रयोजनानुसन्धानस्य वायसदशनगणनतुल्यता प्रसङ्गमेवेति "देवदत्तो दण्डेन सोमदत्तं दण्डयते" इत्यादौ कर्तृभिन्नेन दण्डेनोत्पन्नो यो दण्डसंयोगादिरूपखेदक्रियानुकूलव्यापारः, तस्याश्रयत्वेन देवदत्ते दण्डनक्रियाकर्तृत्वानुपपत्तिर्माभूदिति "तत्कार्योत्पत्त्यनुकूलेति" व्यापारविशेषणम् । तत्रैव तद्दोषभिया "तत्" पदस्यापि प्रवेशः प्रतिपादितः । विशेष्यदले "तत्क्रियानुकूले"ति व्यापारविशेषणदानेनैव

कारकत्वं विशेष्यदलेन, तथाच तत्क्रियाकर्मत्वाद्यन्यतमशून्यत्वे सति तत्क्रियाकारकत्वं तत्कर्त्तृत्वं वाच्यमित्यत आह—अन्यच्चेति । लघुरूपमन्यद् दुर्वचमित्यर्थः, लघुरूपञ्च मयैव वक्तव्यमिति भावः ॥ १५ ॥

सिद्धस्वमतस्थापनप्रकारवाक्यम्—

अत्राहुः,—"अनुकूलकृतिमत्त्वं कर्त्तृत्वम्" पाकानुकूलव्यापारवत्त्वप्रतिसन्धानेऽपि काष्ठादौ तान्त्रिकाणां स्वरसतः कर्त्तृपदाप्रयोगात्, कृताकृतविभागादिना कृधातोर्यत्नार्थकत्वे निश्चिते आश्रयार्थकतृजन्तकृधातुव्युत्पन्नकर्त्तृपदस्य यत्नाश्रयार्थबोधकत्वाच्च, अचेतने कर्त्तृपदप्रयोगो गौणः ॥१६॥

स्वाभिप्रेतलक्षणमाह—अनुकूलकृतीति । तत्क्रियाऽनुकूलकृतिमत्त्वं—तत्क्रियाकर्त्तृत्वं तत्क्रियाकर्त्तृशब्दप्रतिपाद्यमित्यर्थः, तत्तत्क्रियानिष्ठविषयतानिरूपितानुकूलत्वविषयतानिरूपितविषयताविशिष्टकृतिमत्त्वमिति तु पर्यवसितार्थः, नातः प्रयोगशून्यतादशायां कर्त्तृत्वव्यवहारप्रसङ्गः । यदि च प्रयोगशून्यतादशायामपि कर्त्तृत्वव्यवहारो ग्रन्थकृतामिष्टः, तदा यथाश्रुतमेव सम्यगिति ध्येयम् । कृतिमत्त्वं समवायसम्बन्धेन बोध्यम् ; यदि च शरीरादावपि कर्त्तृत्वव्यवहारो मुख्यः, तदा समवायावच्छेदकताऽन्यतरसम्बन्धेन तद्वत्त्वं बोध्यम् , ईश्वरपरिगृहीतशरीरे कर्त्तृत्वव्यवहारो भाक्त एवेति ध्येयम् । (१) व्याप्यवृत्तेरवच्छेदकत्वं स्वीकृत्य तत्रापि मुख्यकर्त्तृत्वव्यवहार इति केचित् । स्वोक्तौ प्रमाणमाह—पाकानुकूलेत्यादिना प्रतिसन्धानेऽपीत्यन्तेन व्यवहर्त्तव्यज्ञानं सम्पादितम् । तान्त्रिकाणां=विवेचकानां, स्वरसतः=लक्षणां विना । स्वोक्तौ योगार्थत्वमप्युपपादयति—कृताकृतेति । ओदनपाकसाधककृतिजन्ये कलायपाके मत्तो भूतं, न तु मया कृतमिति व्यपदेशाद् ओदनपाकः कृतः, न तु कलायपाक इति विभागादिनेत्यर्थः, आदिना "पच-

---

देवदत्तो ज्ञातं रिपुं हन्ति"इत्यादौ रिपौ स्वभिन्नकर्त्तृकारकजन्यस्य ज्ञानक्रियानुकूलतदीयमनःसंयोगरूपव्यापारस्य जनकतयाऽतिव्याप्तिवारणं स्यादिति बोध्यम् ।

(१) अत्र ध्येयपदस्वारस्येनेदमाकूतितं स्यात्, यद् अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणभावप्रतियोगित्वम् , यथा कपिसंयोगादौ, एकस्यैव वृक्षे कपिसंयोगतदभावयोर्विद्यमानतासत्त्वात् । तथा च तत्तदभावयोर्मिथोविरुद्धतया तयोरेकत्वसमावेशादवच्छेदकभेदकल्पना आवश्यकी । अतो यद्यदभावयो एकत्र प्रतीतिः प्रामाणिकी, तत्तदभावयोरेव, अवच्छेदकभेदकल्पना न्याय्या, यद्यदभावयोश्च न तथा प्रतीतिस्तयोस्तत्कल्पना अनुचिता। एवञ्च नित्याया ईश्वरकृतेर्न अवच्छेदक कल्पनेति बोध्यम्।

तीत्यादौ पाकं करोतीत्यादिवृद्धविवरणादिपरिग्रहः । नन्वेवमचेतने कर्तृपदप्रयोगो-लक्षणां विना न स्यादित्यत्र इष्टापत्तिमाह,—अचेतने इति । गौणः—लाक्षणिकः॥ १६ ॥

स्वमतसाधनप्रकारवाक्यम्—

यदि चान्यविषयककृतिजन्ये नान्तरीयके मत्तो भूतं न तु मया कृत-मितिव्यपदेशान्न मुख्यकर्तृत्वं, तदा तत्तद्विषयकत्वेनापि कृतिर्विशेषणीया । न चैवं तद्विषयककृतिमत्त्वमेव तत्तत्क्रियाकर्तृत्वमस्तु, गुरुतरभारोत्तोलनादौ तद्विषयककृतिमत्त्वेऽपि उत्तोलनक्रियाऽऽद्यनिष्पत्तौ कर्तृपदाप्रयोगात्(१)१७॥

ननु नान्तरीयककलायपाकस्थले 'कलायं पचती'ति प्रयोगः स्यात् तदनुकूल कृतिमत्त्वात् , न स्याच्च न पचतीत्यादि प्रयोगस्तदनुकूलकृत्यभावस्याभावादित्यत-आह, यदि चेति ।—वस्तुतस्तद्द्वयमपीष्टमेवेत्यतो यदि चेत्युक्तम् । तद्विषय-कत्वेनापीति ।—तथा च स्वनिष्ठविषयतानिरूपकत्वस्वजनकत्वोभयसम्बन्धेन तत्तत्क्रियाविशिष्टकृतिमत्त्वं कर्तृत्वमिति फलितम् ॥ १७ ॥

स्वमतसाधनप्रकारवाक्यम्—

विषयत्वञ्च साध्यत्वेन बोध्यम् । तेन भोजनकृतेरुद्देश्यत्वेन सुखादिविषयकत्वेऽपि तत्कर्त्तुर्न सुखकर्तृत्वम् । अस्मदादिकर्तृकपाका-दावपीश्वरस्य कर्तृत्वमिष्टमेव, न चैवमीश्वरः पचतीति प्रयोगः स्यात्, तथाविवक्षायामिष्टत्वात् ॥ १८ ॥

विषयत्वमिति—साध्यत्वेन अभेदे तृतीया, साध्यत्वाभिन्नं विषयत्वमित्यर्थः । तेन = साध्यत्वाख्यविषयतानिवेशेनेत्यर्थः । उद्देश्यत्वेनेति—अत्रापि अभेदे तृती-या । न सुखकर्तृत्वं—तथाच 'भोजनं करोती'तिवत् 'सुखं करोती'तिप्रयोगस्य शक्त्यनापत्तिरिति, लक्षणया तु तादृशप्रयोगो भवत्येवेति भावः । नन्वेवमस्मदादि-कर्तृकपाकादितात्पर्य्येणापि 'ईश्वरः पचती'ति प्रयोगः स्यादत आह—अस्मदा-दीति । ईश्वरपरिगृहीतशरीरावच्छेदेन ईश्वरकर्तृकपाकतात्पर्ये ईश्वरः पचतीति प्र-योगः सर्वदैवेष्टः, इत्यतोऽस्मदादिकर्तृकपाकादावपीति, पाकादावपि—पाकता-त्पर्य्येणापि । न चैवमिति । एवं—तादृशपाकादावीश्वरकर्तृत्वस्येष्टत्वे । तथा-विवक्षायां—स्वनिष्ठ—साध्यत्वाख्यविषयतानिरूपकत्वस्वजनकत्वोभयसम्बन्धेन वस्तुगत्या पाकविशिष्टेश्वरकृतिप्रकारकबोधतात्पर्य्ये इत्यर्थः ॥ १८॥

---

(१) तथा च तादृशदोषनिरासाय "तत्तत्क्रियानुकूलकृतिमत्त्व" मित्यस्यावश्यकमेव।

२स्वमते कल्पनान्तरवाक्यम्—

कार्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वमेव वा लक्षणघटकमित्याहुः(१) ॥ १९ ॥

(१) अत्रेदं बोध्यम्, एतावता प्रबन्धेन ग्रन्थकृन्मते "तत्तत्क्रियाऽनुकूलकृतिमत्त्वं तत्तत्क्रियाकर्त्तृत्वमि"ति पर्यवसितम् । काष्ठादौ पाकाद्यनुकूलव्यापारवत्वप्रतिसन्धानेऽपि कर्त्तृपदाप्रयोगात् । कृताकृतविभागादिना सिद्धयत्नशक्तिकेन कृ धातुना तृजन्तेन सिद्धस्य कर्त्तृपदस्य यत्नाश्रयबोधकत्वाच्च ।

अचेतने कर्त्तृपदप्रयोगस्तु गौणः । वृष्टिगुरुतरभारोत्तोलनादिक्रियाविषयकयत्नसत्त्वेऽपि तत्तत्क्रियाया अनिष्पत्तौ तत्तत्क्रियाकर्त्तृत्वाव्यवहाराद्विषयत्वं विहाय अनुकूलत्वमुपात्तम् । यदि तु मत्तो भूतं नतु मया कृतमिति व्यपदेशान्नान्तरीयककृतिसाध्यस्य पिष्टमध्यस्य शर्कराभोजनस्य न कर्त्तृत्वं तदा विषयत्वमपि निवेश्यम् । तच्च साध्यत्वेन । तेन यागादिकृतेरुद्देश्यत्वेन स्वर्गादिविषयकत्वेऽपि न यागादिकर्त्तुः स्वर्गकर्त्तृत्वम् । अस्मदादिकर्त्तृकपाकादिकर्त्तृत्वमीश्वरस्येष्टम् । एवञ्च तथा विवक्षायामीशः पचतीति प्रयोगोऽपीष्ट एव, नो चेत् कार्यत्वानवच्छिन्नजन्यतानिरूपितत्वमसाधारण ( मनुकूल ) त्वं निवेश्यमिति नैयायिकाः ।

वैयाकरणास्तु—"अनभिहिते कर्त्तरि" इत्यादावचेतनेऽपि कर्त्तृपदप्रयोगात्क्रियाश्रयत्वमेव कर्त्तृत्वम् । कारककर्मादिपदवत्कृधातुरप्यत्र क्रियाऽर्थक एव । आश्रयत्वमिह तत्तदाख्यातार्थद्वारा । तथा च "स्वतन्त्रः कर्त्ता" १-४-५४ इति पाणिनिसूत्राद् यगाद्यसमभिव्याहृताख्यातेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यते तद्धात्वर्थनिरूपिततद्धर्मवत्त्वं तद्धात्वर्थकर्त्तृत्वम् । स्वातन्त्र्यञ्चात्र—कर्त्तृप्रत्ययसमभिव्याहारे प्रधानीभूतव्यापाराश्रयत्वम् । पक्वस्तण्डुलो देवदत्तेनेत्यादौ तण्डुलस्य कर्त्तृत्वापत्तेर्वारणाय कर्त्तृप्रत्ययसमभिव्याहारेति । यथा पचतीत्यादौ पाकानुकूलव्यापारवत्त्वम् । (१)जा-

(१) इदञ्चात्र ज्ञेयम् "स घटं जानाती"त्यादौ तु घटविषयकज्ञानानुकूलो व्यापार इति बोधः । ज्ञानजनकव्यापारश्च मनश्चक्षुःसंयोगादिः, अत एव मनो जानातीत्यादिप्रयोगा दृष्टिपथमायान्ति । एवञ्च तत्र ज्ञानरूपफलाश्रयत्वाद्घटादेः कर्मत्वम्, व्यापाराश्रयत्वाद्देवदत्तादेः कर्त्तृत्वम् । न चात्र फलव्यापारयोः सामानाधिकरण्यादकर्मकताऽऽपत्तिः, कालिकादिसम्बन्धेन सर्वेषां सामानाधिकरण्यसत्त्वादकर्मकत्वापत्तया फलताऽवच्छेदकसम्बन्धेन सामानाधिकरण्यवैयधिकरण्ययोः सकर्मकाकर्मकयोर्लक्षणेऽवश्यं निवेशनीयत्वात् । प्रकृते च फलताऽवच्छेदकः सम्बन्धो विषयता, व्यापारताऽवच्छेदकः समवायादिरिति वैयधिकरण्यं स्पष्टमेव । अत एव ज्ञानस्य घटात्मोभयवृत्तित्वेऽपि कर्मप्रत्ययेन विषयतासम्बन्धेन ज्ञानाश्रयघटस्यैवाभि-

कल्पान्तरमाह, कार्य्यत्वेति—तादृशजन्यतानिरूपितानुकूलत्वरूपमसाधारणमनुकूलत्वमेवेत्यर्थः। लक्षणघटकं—कर्त्तृलक्षणघटकमित्यर्थः। आहुरित्यनेनास्वरसः सूचितः, स च 'विश्वस्य कर्त्ता भुवनस्य गोप्ते'त्यादिबहुविधवेदविरोधरूपः॥१९॥

## अथ कर्मत्वविवेचनम्।

आक्षेपवाक्यम्—

(१)कर्म्मत्वन्तु न करणव्यापाय्र्यत्वं तद्धि करणाजन्यक्रियाऽनुकूलव्यापारा-

---

नातीत्यादौ ज्ञानाश्रयत्वम्। नश्यतीत्यादौ नाशप्रतियोगित्वमिति। "चैत्रेण तण्डुलः पच्यत" इत्यादौ पाकजन्यफलाश्रयत्ववारणाय यगाद्यसमभिव्याहृतेति। अत्र चैत्रादेः कर्त्तृत्वन्तु पचतीत्याद्याख्यातबोध्यधर्ममादायैवेति बोध्यम्। धात्वर्थान्वितद्वितीयाद्यार्थककर्मत्वकरणत्वादिवारणायाख्यातेनेति। जानातीत्यादौ आख्यातार्थं आश्रयत्वम् पाककर्तृत्वं मा भूत्, एवं हन्तीत्यादौ हिंसाऽऽश्रयत्वं गमनकर्त्तृत्वं मा भूदिति यत्तदोर्धात्वर्थविशेषणमुक्तम्।

यदि च काष्ठं पचति, स्थाली पचतीत्यादिप्रयोगवशात्करणादीनां कर्त्तृत्वमिष्टम्। "पच्यत ओदनः स्वयमेवे"त्यादौ कर्मकर्त्तरि कर्मणोऽपि तदिष्टम्। "ओदनः स्वं पचती"त्यप्रयोगोऽसाधुत्वादिति किमाख्यातपदेनेति विभाव्यते चेत्तदा कर्मत्वविशिष्टस्य कर्त्तृरूपतावारणाय तदुपादेयम्। नहि कर्मत्वादेः कर्त्तृत्वरूपत्वे "अनभिहिते कर्त्तरि" इत्यनुशासनार्थः सङ्गच्छत इत्याहुः।

वैयाकरणमते लक्ष्ये समन्वयो यथा-"चैत्रो गच्छती"त्यादौ तद्धातूत्तरशान्वितयगाद्यसमभिव्याहृतेन "ति" इति आख्यातपदेन समं यो गमनरूपोऽर्थस्तत्रान्वितो यः कृतिरूपो धर्मस्तच्चैत्रे विद्यते, इत्यादिरीत्या बोध्यः।

(१) अत्रेदं ध्येयम् शाब्दिकनये कर्मत्वम्—कर्त्ता स्वनिष्ठव्यापारजन्यफलेनात्यन्तं सम्बन्धुमिष्यमाणः कर्मेत्यर्थककर्त्तुरीप्सिततमंकर्मेत्याद्यनुशासितसंज्ञावत्त्वम्। एव ञ्चौदनःपचतीत्यादावेकाश्रयक ओदननिष्ठविक्लित्त्यनुकूलो व्यापार इत्येवं शाब्दबोधप्रकारः। पच्यते ओदन इत्यत्राप्येवमेव। तार्किकास्तुः-बहुकोलाहलेन परसमवेतत्तद्धात्वर्थान्वयिफलविशेषशालित्व तत्तद्धात्वर्थकर्मत्वं चैव निर्द्धारयन्ति देवदत्ताश्रित व्यापारजन्यविक्लित्त्याश्रय ओदन इति बोधमाहुः।

केचित्तु—देवदत्तनिष्ठव्यापारजन्यौदननिष्ठा विक्लत्तिरिति बोधमिच्छन्ति। तत्र च

---

ध्यानाद्घटो ज्ञायत इति प्रयोगः, न तु आत्मा ज्ञायत इति। तथा कर्त्तृप्रत्ययेन समवायसम्बन्धेन ज्ञानाश्रयस्याभिधानादात्मा जानातीति प्रयोगः, घटो जानातीति। यद्वा ज्ञानेच्छाऽऽदिरेव व्यापारः। "ज्ञातो घट" इति प्रतीत्या तज्जन्या ज्ञातताऽऽदिफलं तदाश्रयत्वाद्घटादेः कर्मत्वमित्यास्तां तावत्।

श्रयत्वम् । तच्च दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्ये दात्रेऽतिव्याप्तम् ॥ २० ॥

"किं कर्मत्वम्" इति जिज्ञासायां परमतनिराकरणपूर्वकं स्वमतं व्यवस्थापयितुं प्राचीनमतीयलक्षणमुपन्यस्य दूषयति, **करोति**—क्रियाऽनुकूलव्यापाराश्रये करणे कर्त्तरि चातिव्याप्तिवारणाय जन्यान्तं व्यापारविशेषणं, तथा च दात्रादिकरणजन्यसंयोगादिरूपव्यापाराश्रयकाष्ठादौ लक्षणसमन्वयः । **हस्तादीति**—छिदाऽनुकूलहस्तादिकरणजन्यहस्तसंयोगादिरूपव्यापाराश्रये दात्रे इत्यर्थः ॥ २० ॥

आक्षेपवाक्यम्—

नापि 'परसमवेतक्रियाजन्यफलशालित्वम्' गमिपत्योः पूर्वस्मिन् देशे, त्यजेश्चोत्तरस्मिन् देशे, स्पन्देः पूर्वापरयोश्च कर्मत्वप्रसङ्गाद्, एवन्तीरे नदी वर्द्धते' इत्यादौ वृद्धेरवयवोपचयस्य परम्परया तीरप्राप्तिफलकत्वात् तज्जन्यफलाश्रये तीरेऽतिव्याप्तेः (१)॥ २१ ॥

**परसमवेतेति**—स्वभिन्नसमवेतेत्यर्थः, **स्वं**—कर्मत्वेनाभिमतं, नातः-कर्त्तर्यतिव्याप्तिरिति- क्रिया = धात्वर्थः, फलमत्र धर्म्मः । **गमिपत्योरिति**—संयोगावच्छिन्नक्रियाया गमिधात्वर्थतया तज्जन्यविभागरूपफलवत्त्वात् पूर्वदेशेऽतिव्याप्तिः । अधःसंयोगावच्छिन्नक्रियायाः पतिधात्वर्थतया च पूर्वदेशेऽतिव्याप्तिर्बोध्या । पतिधातोरकर्मकत्वे च परदेशेऽप्यतिव्याप्तिर्बोध्या । **त्यजेरिति** । विभागावच्छिन्नव्यापारस्य त्यजिधात्वर्थतया तज्जन्यसंयोगरूपफलवत्त्वमादाय उत्तरदेशेऽतिव्याप्तिरिति भावः । **स्पन्देरिति** । क्रियायाः स्पन्दधात्वर्थतया तज्जन्यविभागरूपफलवत्त्वमादाय पूर्वदेशे, तादृशसंयोगरूपफलवत्त्वमादाय उत्तरदेशे चातिव्याप्तिरिति भावः । **वृद्धेः**,—वृधिधात्वर्थस्य, **अवयवोपचयस्य**—बहुत-

---

"सुप आत्मनः क्यच्" (पा० सू० ७-४-३३) तिसूत्रस्थं भाष्यं प्रमाणत्वेनोद्घोषयन्तीति तन्न, भाष्यकैयटयोरन्याभिप्रायिकत्वात् । एवञ्च सर्वग्रन्थानुकूलभाष्यनिर्वाहे सति स्वातन्त्र्येण तद्विरुद्धं भाष्यसमर्थनमनुचितमिति दिक् ।

( १ ) अयं भावः, नदी वर्द्धत इत्यादौ वृद्धेरवयवोपचयरूपायाः क्रियायाः स्वसमवायिसंयोगसम्बन्धेन, "यस्मिन्निरूपणीयं तत् स्वमिति" स्वं नदी, तत्समवायिनो भेदाजलबिन्दव एतेषां तत्र संयोगः स्वाभाविकत्वेन फलस्य तीरप्राप्तिरूपस्याश्रये तीरे कर्मत्वापत्तिः स्यादिति बोध्यम् ।

रावयवस्येत्यर्थः। **परम्परया**—स्वसमवायिसंयोगसम्बन्धेन, **तीरप्राप्तिः**—नदीतीरसंयोगः, **तज्जन्यफलाश्रये**—अवयवोपचयजन्यसंयोगरूपफलाश्रय इत्यर्थः। अतिशयशक्तिप्रदर्शनाय बहुतरस्थलेऽतिव्याप्तिप्रदर्शनमिति ॥ २१ ॥

सिद्धान्तवाक्यम्—

**अत्राहुः—त्यजिगमिप्रभृतीनां स्पन्दनमात्रं नार्थः, नहि त्यजति—गच्छतीत्यनयोः प्रतीत्योरविशेषं कश्चिदभ्युपैति। एवञ्च त्यजेर्विभागेन, गमेरुत्तरदेशसंयोगेन, पतेरधः संयोगेनावच्छिन्नाः स्पन्दा वाच्याः, तथा च 'तत्तद्धात्वर्थताऽवच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्म्मत्वम्' ॥ २२ ॥**

धात्वर्थताऽवच्छेदकफलघटितकर्म्मत्वलक्षणस्याग्रे वाच्यतया गम्यादिधातूनां धात्वर्थताऽवच्छेदकफलस्याप्रसिद्धिशङ्कानिबन्धनकर्म्मत्वलक्षणस्याव्याप्तिशङ्कां परिजिहीर्षुर्गम्यादिधात्वर्थताऽवच्छेदकं फलं दर्शयितुमाह—**त्यजिगमिप्रभृतीनामिति। स्पन्दनमात्रमिति**—मात्रपदेन तदवच्छेदकफलव्यवच्छेदः। **इत्यनयोरिति।** वाक्यजन्यबोधयोरित्यर्थः। **अविशेषमिति**—अविशेषोपगमे त्यागो न गमनमित्यादिप्रयोगाप्रसङ्गः, प्रसङ्गश्च त्यागो गमनमित्यादिप्रयोगस्येति भावः। **एवञ्च**—निरुक्तानुपपत्त्या वैलक्षण्यस्यावश्यकत्व इत्यर्थः। त्यजेर्विभागेनेत्यादि तृतीयान्तत्रयस्यावच्छिन्ना इत्यनेन सम्बन्धः। **अवच्छिन्नाः**—जनकतासम्बन्धेन तादृशतादृशधात्वर्थताऽवच्छेदकविशिष्टाः क्रिया वाच्या इत्यर्थः। एतावता संयोगादीनां गम्यादिधात्वर्थताऽवच्छेदकत्वमुपपाद्य तद्घटितकर्म्मत्वलक्षणमाह—**तथा चेति।** संयोगादीनां गम्यादिधात्वर्थताऽवच्छेदकत्वे चेत्यर्थः। **तत्तद्धात्वर्थकर्म्मत्वमिति।** तथा च त्यजिधात्वर्थताऽवच्छेदकविभागवत्त्वेऽपि तस्य गमिधात्वर्थताऽनवच्छेदकतया पूर्वदेशस्य न गमनकर्म्मत्वमिति भावः ॥ २२ ॥

लक्ष्ये समन्वयप्रकारवाक्यम्—

**स्पन्दिवृधिधात्वोश्च फलावच्छिन्नव्यापाराबोधकत्वान्न पूर्वापरदेशयोस्तीरस्य च कर्मत्वं फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यवहारो मुख्यः सविषयकपदार्थाभिधायि-जानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वं-घटं जानातीत्यादौ द्वितीयातो विषयत्वोपस्थितौ घटविषयकज्ञानाश्रयतावानित्यन्वयबोधात्** २३

स्पन्दिवृद्धयोः सकर्म्मकत्वं निरस्यति, **स्पन्दिवृधिधात्वोरिति**—फलवाच्छि-

ज्ञव्यापाराशक्तत्वादित्यर्थः । नन्वेवं घटं जानातीत्यादौ घटादेः कर्म्मता न स्याद्, ज्ञाधातुप्रभृतीनां फलावच्छिन्नव्यापाराबोधकत्वादित्यत आह—सविषयकेति । जानात्यादीति । आदिना द्वेष्टीच्छति-करोत्यादीनां संग्रहः । विषयित्वरूपवि-भक्त्यर्थद्वारेति । केवलविभक्त्यर्थद्वारेत्युक्तावाश्रयत्वरूपविभक्त्यर्थद्वारा नामार्थो-न्वयिबोधकत्वाद् भूप्रभृतीनामपि सकर्म्मकत्वापत्तिरतो विषयित्वेति, उद्देश्यत्वाख्य-विषयताभिन्नविषयतेत्यर्थः(१) । तेन न वक्ष्यमाणात एवेत्यादिग्रन्थासङ्गतिः, न वा कटं करोतीत्यादौ वीरणं करोतीत्यादिप्रयोगः । तथा च नामार्थविषयतानिरूपितता-दृशविषयत्वविषयतानिरूपितस्यार्थनिष्ठविषयताशालिबोधजनकत्वमेव गौणं सकर्म्मक-त्वं पर्य्यवसितम् । केचित्तु अत एवेत्यादिग्रन्थसङ्गमनाय नामार्थविषयतानिरूपित-विषयत्वविषयतायां विषयत्वावच्छिन्नत्वं निवेशयन्ति, तन्न, बह्निमनुमिनोतीत्यादौ वि-धेयतात्वरूपेणैव द्वितीयार्थबोधकताया व्युत्पत्तिसिद्धतया तत्र माधातोः सकर्म्मकत्वानु-पपत्तेः । अथ वह्निमत्त्वेन पर्वतमनुमिनोतीत्यादौ तृतीयान्तसमभिव्याहृतानुमित्यर्थक-धातुयोगे द्वितीयाया उद्देश्यत्वबोधकतयाऽपि व्युत्पत्तिसिद्धतया माधातोर्भवन्मतेऽपि स-कर्मकत्वानुपपत्तिरिति चेन्न, वह्निमनुमिनोतीत्यादिस्थलीयबोधमादाय तस्य सकर्म्मकत्व-व्यवहारोपपत्तेः कृतिनिरूपितविलक्षणोद्देश्यत्वाख्यविषयताभेदस्य प्रकृते निवेशाच्चेति । 'ज्ञाने घटो भासते' इत्यत्र विभक्त्यर्थस्य संसर्गतया भानमते सप्तम्यर्थनिरूपितत्वस-म्बन्धेन ज्ञानविशिष्टा या भासधात्वर्थविषयता, निरूपितत्वसम्बन्धेन तद्विशिष्टा या आख्यातार्थाश्रयता, तदाश्रयो घट इत्याकारकबोधोत्पत्त्या धात्वर्थविषयताद्वारा ना-मार्थज्ञानान्वय्याश्रयत्वबोधकतया आख्यातवारणाय विभक्त्यर्थेति । घटं जानाती-त्यादौ विभक्त्यर्थविषयताद्वारा ज्ञाधात्वर्थान्वयिघटादिबोधकघटपदवारणाय नामा-र्थेति । गौणं लाक्षणिकम् । द्वितीयात इति लक्षणयेति शेषः । आश्रयतेति । तत्राख्यातस्य लाक्षणिकत्वादिति भावः ॥ २३ ॥

दृष्टान्तवाक्यम्—

अत एव यतिधातोरकर्मकत्वं तदुपस्थापिते यत्ने नामार्थस्योद्देश्यत्वे-नैवान्वयबोधाद् अभुञ्जानेऽपि भोजनाय यतत इति प्रयोगाद्, अत एव

---

(१) उद्देश्यत्वाख्यविषयताभिन्नविषयतास्वीकारेणैव कटं करोतीत्यादावाप-न्नाकाङ्क्षाऽपगता भवेदन्यथा वीरणं करोतीत्यनेन सार्द्धं पर्य्यायताऽऽपत्त्याऽविलक्षणबो-धापत्तिः स्यादिति बोध्यम् ।

तादृशधातुप्रयोगे कर्मप्रत्ययाभावाद् भोजनं यतत इति न प्रयोगः ॥ २४ ॥

**अत एवेति** ।यत एव उद्देश्यत्वान्यविषयताद्वारा नामार्थान्वयिधातोरेव सकर्म्मकत्वमत एवेत्यर्थः । **अकर्म्मकत्वमिति** । अत्र केचिद् मातुः स्मरतीत्यादौ "अधीगर्थदयेशां कर्मणि" इत्यादिसूत्रानुशिष्टद्वितीयाबाधकषष्ठीवद् द्वितीयाबाधिकैव चतुर्थीति यतिधातोः सकर्मकत्वमेवेत्यपि वदन्ति । **उद्देश्यत्वेनैवेति** । एवकारेण उद्देश्यताभिन्नविषयताव्यवच्छेदः । ननु भोजनाय यतते इत्यादौ चतुर्थ्यर्थः साध्यत्वादिरूपविषयत्वमेवेति कथं यतिधातोरकर्म्मकत्वम् ? अत आह—**अभुञ्जान इति** । इति प्रयोगात्—इत्येव प्रयोगादित्यर्थः, तथा च भोजनसाध्यताककृतिकाले तथाप्रयोगो न भवत्येव किन्तु भोजनं करोतीत्येव तत्र प्रयोग इति न साध्यत्वाख्यविषयता चतुर्थ्यर्थः, न वा सकर्म्मकत्वमिति । **अत एवेति**—यतिधात्वर्थे साध्यत्वाख्यविषयताद्वारा नामार्थानन्वयादेव **कर्म्मप्रत्ययाभावात्**—कर्म्मताबोधकद्वितीयाऽऽद्यभावादित्यर्थः ॥ २४ ॥

दोषदूरीकरणप्रकारवाक्यम्—

अत्र भूमिं प्रयाति तरुं त्यजति खग इत्यादौ धात्वर्थताऽवच्छेदक-संयोगविभाग-रूपफलत्त्वेऽपि स्वस्य, स्वं प्रयाति त्यजतीत्यप्रयोगात् , धात्वर्थे परसमवेतत्वमपि विशेषणं देयम्(१) ॥ २५ ॥

**इत्यादावित्यनन्तरं** खगादेरिति पूरणीयं, स्वं—खगः । **अप्रयोगादिति**—इत्यादिप्रयोगाभावेन तत्र कर्मत्वाभावादित्यर्थः, तथा च तरुं त्यजति खग इत्यादौ खगे कर्मतालक्षणस्यातिव्याप्तिरित्यभिप्रायः । **परसमवेतत्वमिति** । स्वभिन्नसमवेतो यो धात्वर्थस्तन्निष्ठं यद्धात्वर्थत्वं तदवच्छेदकीभूतधर्मवत्त्वं तत्क्रियाकर्मत्वमित्यर्थः । न च तत्र खगभिन्नं यत् खगान्तरं मनुष्यादिकं वा, तद्वृत्तिक्रियानिष्ठगमिधात्वर्थताऽवच्छेदकसंयोगवत्त्वस्य खगे सत्त्वात् कुतोऽतिव्याप्तिवारण-

---

(१) अयं भावः "ग्रामं गच्छति" इतिवत् 'स्वं गच्छति" इति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थ इष्यते तस्य च धात्वर्थेऽन्वयः, परत्वे चैकदेशेऽप्याकाङ्क्षावैचित्र्यात्, प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः, एवञ्च "ग्रामं गच्छति चैत्र" इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः । स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वस्य बाधात् "स्वमात्मानं गच्छति" इति न प्रयोगः ।

मिति वाच्यम् , स्वभिन्नसमवेतं यद् गमनादिकं, तज्जन्यो गमिधात्वर्थताऽवच्छेदको-यो धर्मस्तद्वत्त्वं तत्क्रियाकर्मत्वमित्यस्य विवक्षितत्वाद् , जन्यत्वञ्च उभयावृत्तिधर्मावच्छिन्ननिरूपितं बोध्यं, तेन संयोगत्वेन क्रियात्वेन सामान्यतः कार्यकारणभावमादाय अन्यनिष्ठसंयोगस्य अन्यनिष्ठक्रियाजन्यत्वेऽपि न क्षतिरिति मन्तव्यम्॥२५॥

दोषोद्भावनप्रकारवाक्यम्—

न चैवमुभयकर्मजसंयोगस्थले मल्लो मल्लं गच्छतीतिप्रयोगवद् स्वात्मानं गच्छतीति प्रयोगः स्यात् , भूमिं प्रयातीत्यादितो हि द्वितीयादिनापरत्वं प्रकृत्यर्थापेक्षिकं बोध्यते । तथा च भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमानित्यन्वयबोधः । स्वात्मानं गच्छतीत्यादौ तु स्वभिन्नसमवेतम् आत्मवृत्तिसंयोगजनकं मल्लान्तरवृत्ति यद्गमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव नातिप्रसङ्ग इति(१) ॥ २६ ॥

एवं—परस्परमल्लस्य तादृशक्रियाकर्मत्वेऽपीत्यर्थः । प्रयोगः स्यादिति, तथाच परस्परमल्लस्य कर्मतालक्षणलक्ष्यत्वेऽपि तादृशप्रयोगोऽनुभवविरुद्ध इति भावः । भूमिं प्रयाति खग इत्यादौ द्वितीयायाः परत्वार्थकतामुपगम्य तादृशबोधः । तादृशबोधं प्रदर्शयन् प्रकृतेऽतिप्रसङ्गं वारयति–भूमिं प्रयातीत्यादिना । नातिप्रसङ्ग इत्यन्तेन॥२६॥

आक्षेपनिराकरणप्रकारवाक्यम्—

अत्र प्रकृत्यर्थस्यान्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन परत्वेऽन्वयः, पृथिवीं प्रयाति विहग इत्यादौ विहगस्य पृथिवीत्वावच्छिन्न-प्रतियोगिताक-भिन्नत्वाभावादनन्वयापत्तेः ॥ २७ ॥

परत्वे-भेदे । भिन्नत्वाभावादिति–विगहस्यापि पृथिवीत्वादिति भावः॥२७॥

आक्षेपनिराकरणप्रकारवाक्यम्—

(२) प्रतियोगितामात्रेणान्वये आत्मनोऽपि स्वप्रतियोगिकद्वित्वाद्यत्र-

---

(१) अय भावः, यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वस्मिन्नसमवेतत्वेऽपि तादृशक्रियाऽऽश्रयतायाः स्वस्मिन् बाधात् "मल्लः स्वं गच्छति" इत्यपि न प्रयोगः ।

(२) अत्रेदमाकूतम् "घटो न घटपटोभयमि"तिबलात् स्वनिष्ठसंयोगजनकस्वसमवेतक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यतया तदभानेऽप्यबाधितं स्वनिष्ठसंयोगजनकत्वं विषयीकृत्य शाब्दबोधसम्भवात् , तदर्थमात्रतात्पर्येण "स्वं गच्छति" इत्यादि दोषदानादरस्तिष्ठत्येव ।

च्छिन्नप्रतियोगिताकभिन्नत्वात्तथैव दोषाद् , अतो द्वितीयाद्यर्थफले यद्व्यक्तेरन्वयस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयः । पृथिवीं प्रयातीत्यादौ यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकत्वं प्रयाणस्य शाब्दधीविषयस्तद्व्यक्तिभिन्नत्वं विहगे वर्त्तत एवेति न कोऽपि दोषः(१) ॥ २८ ॥

तथैव दोषः—स्वमात्मानं प्रयातीत्यापत्तिरेव दोषः । प्रकृत्यर्थस्य—द्वितीयाप्रकृत्यर्थस्य, परत्वेऽन्वय इत्यनेनान्वयः । विहगेन गम्यते भूमिरित्यादौ द्वितीयाप्रकृतेरभावात् कर्माख्यातार्थपरत्वे कस्यान्वयः ? इत्यत आह—कर्माख्यातार्थफलान्वयिनश्चेति—तथा च स्वबोधकबोध्यफलान्वयिन एव स्वस्मिन्नन्वय इत्युभयसाधारण एको नियम इति भावः ॥ २८ ॥

मतान्तरेणाक्षेपनिराकरणप्रकारवाक्यम्—

अन्ये तु पृथिवीं प्रयातीत्यादौ तु भूखण्डस्यैव पृथिवीपदार्थत्वं, न तु वृक्षविहगसाधारणपृथिवीत्वजात्यवच्छिन्नस्य, तथा चान्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तावपि न क्षतिः, एवमन्यत्रापि कर्मवाचकसामान्यपदे लक्षणया विशेषपरत्वं सूपपन्नमित्याहुः(२) ॥ २९ ॥

ननु पृथिवीं प्रयातीत्यादौ तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पृथिवीत्वावच्छिन्नस्य भेदेऽन्वयो न भवति तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्यैव तद्धर्मावच्छिन्नस्य सम्बन्धत्वादितिवादिनां मते आह–केचित्तु पृथिवीमिति । पृथिवीपदार्थत्वमिति लक्षणयेति शेषः । अनन्तलक्षणापत्तिरूपास्वरस एतन्मते आहुरित्यनेन सूचितः ॥ २९ ॥

---

(१) अयं भावः, अत्र परत्वे 'स्वप्रकृत्याद्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन, आहोस्वित् प्रतियोगितामात्रेण, अन्वयोऽनुमोद्यते ? नाद्यः "पृथिवीं प्रयाति खगः" इत्यादावनन्वयापत्तेः, खगस्य पृथिवीत्वावच्छिन्नभिन्नत्वाभावात् । न द्वितीयः स्वात्मन्यपि घटपटोभयभेदस्य सत्त्वात् "स्वं प्रयाती"त्यापत्तेरिति चेन्न, 'यद्व्यक्ते'रित्यादि मूलोक्तस्वीकारेणादोषात् ।

(२) नागो नकुलं दृष्ट्वा पलायितः" इत्यादिवाक्ये नकुलत्वसामान्यधर्मावच्छिन्नवाचकोऽत्र "नकुल" शब्दो लक्षणया नकुलमात्रदर्शनपरको बोध्यः । अन्यथोक्तप्रकारेणानन्वयापत्तिः स्यादिति बोध्यम् ।

यत्तु तत्क्रियाऽनधिकरणत्वे सति तत्क्रियाऽवच्छेदकफलशालित्वं कर्मत्वं द्वितीयाऽऽदेरपि तत्क्रियाऽनधिकरणत्वमर्थ इति तन्न, क्रियाव्यक्तिभेदेनाऽनन्तशक्तिकल्पनापत्तेः ॥ ३० ॥

तत्क्रियाऽनधिकरणत्वे सति—तद्धात्वर्थानधिकरणत्वे सति, तद्धात्वर्थताऽवच्छेदकफलशालित्वं तद्धात्वर्थकर्मत्वमित्यर्थः । तरुं व्रजति खग इत्यादौ खगे कर्मतालक्षणस्यातिव्याप्तिवारणाय सत्यन्तम् । ननु खगादौ कर्मतालक्षणस्यातिव्याप्तिवारणेऽपि खगः स्वं गच्छतीत्यादिप्रयोगवारणासम्भव इत्यत आह—द्वितीयाऽऽदेरिति । आदिना कर्माख्यातसंग्रहः, तथा च ग्रामं गच्छतीत्यादौ गमनानधिकरणग्रामवृत्ति-संयोगानुकूल-क्रियाऽनुकूलकृतिमानित्याकारकबोधः, ग्रामो गम्यते इत्यादौ गमनानधिकरणग्रामो गमनजन्यसंयोगवानित्याकारकबोधः । क्रियाव्यक्तिभेदेनेति । समभिव्याहृतक्रियाव्यक्तिभेदेनेत्यर्थः। अनन्तशक्तिकल्पनापत्तेरिति । द्वितीयाऽऽदेरित्यादि, यद्यपि सर्वादिपदवत् समभिव्याहृतधात्वर्थताऽवच्छेदकत्वोपलक्षित-धर्मावच्छिन्नाधिकरणत्वेऽनुगतशक्तिकल्पना प्रकृतेऽपि सम्भवतीति नानन्तशक्तिकल्पना, तथाऽपि अभावप्रतियोगिताऽवच्छेदककोटावुपलक्षणविधया भानानभ्युपगमे सा न सम्भवतीति ध्येयम् । अत्र च मते,—मल्लो मल्लं गच्छतीत्यादौ मल्ले गमनक्रियाऽनधिकरणत्वाभावादत्र कर्मतालक्षणस्याव्याप्तिस्तादृशप्रयोगानुपपत्तिश्च यत्किञ्चिद्गमनक्रियाऽनधिकरणेत्युक्तौ खगः स्वं गच्छतीति प्रयोगापत्तिः, तत्र खगे यत्किञ्चिद्गमनानधिकरणत्वाद् गमिधात्वर्थस्थलेऽपि अनन्तशक्तिश्चेत्यादि दूषणमपि द्रष्टव्यम् ॥ ३० ॥

स्वमतप्रतिपादनप्रकारवाक्यम्—

वस्तुतस्तु अन्योन्याभावप्रतियोगिताऽवच्छेदकत्वं क्रियाऽन्वयि द्वितीयाऽऽदेरर्थः । तथा च द्वितीयाऽऽद्यर्थफले पदार्थैकदेशेऽन्योऽन्याभावे च एकव्यक्तेरेव प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्चाधिकरणत्वेनान्वयः, एवञ्च भूमिं प्रयातीत्यादौ भूमिवृत्ति-संयोगजनकभूमिवृत्त्यन्योऽन्याभाव प्रतियोगिताऽवच्छेदकप्रयाणानुकूलकृतिमानित्यन्वयबोधः । देवदत्तेन ग्रामो गम्यते इत्यादौ ग्रामवृत्त्यन्योऽन्याभावप्रतियोगिताऽवच्छेदकदेवदत्तनिष्ठकृतिजन्यगमनजन्यफलाश्रयो ग्राम इत्यन्वयबोधः । आत्मवृत्तिक्रियायाः स्ववृत्त्यन्योऽन्याभावप्रतियोगिताऽनवच्छेदकत्वादात्मानं प्रयातीत्यादे-

र्नप्रसङ्गः(१) ॥ ३१ ॥

अन्वयिताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तेः सर्वमतसिद्धतया स्वमते तद्विरोध इत्यत आह—वस्तुतस्त्विति । प्रतियोगिताऽवच्छेदकत्वं कुत्रान्वयि ? इत्याकाङ्क्षायामाह–क्रियाऽन्वयीति–कारकविभक्त्यर्थस्यासति बाधके क्रियायामन्वयबोधस्य व्युत्पत्तिसिद्धत्वात् तादृशव्युत्पत्त्याऽन्वयेनैव च नातिप्रसङ्ग इति भावः । नन्वन्योऽन्याभावप्रतियोगिताऽवच्छेदकत्वस्य द्वितीयाऽर्थत्वेऽपि ग्रामं गच्छति नर इति तात्पर्य्येणापि नरो नरं गच्छतीत्यपि प्रयोगः स्याद्, नरनिष्ठसंयोगानुकूलं नरान्तरनिष्ठभेदप्रतियोगिताऽनव छेदकं यद् गमनं तदनुकूलकृतिमत्त्वस्य सत्त्वादत आह—तथा चेति। पदार्थैकदेशेऽन्योऽन्याभावप्रतियोगिताऽवच्छेदकत्वरूपपदार्थैकदेशेऽन्योऽन्यभावे इत्यर्थः । एकव्यक्तेरेवेति । व्युत्पत्तिवैचित्र्यादिति भावः । प्रयाणेत्यादि । संयोगावच्छिन्नक्रियाऽनुकूलकृतिमानित्यर्थः। संयोगस्य द्वितीयाऽर्थतया धात्वर्थघटकतया च द्विधा भानादिति भावः । सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन एकधैव भानमिति केचित्, तन्मते प्रयाणं क्रियामात्रमिति ॥ ३१ ॥

स्वमते लाघवप्रकारवाक्यम्—

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छि-

---

( १ ) एतावता प्रबन्धेन "यद्व्यक्ते" रित्यादिना यद्दोषदूरीकरणाय यत्नं विहितस्तमुपेक्ष्य "वस्तुतस्त्व" त्यादिना प्रकारान्तरमाह । अयं भावः,–स्वस्यापि द्वित्वावाच्छिन्नस्वभेदवत्त्वात् 'स्वं गच्छति' इति प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनव भेदेऽन्वयो वाच्यस्तथा च "चैत्रो द्रव्यं गच्छति" "मल्लो मल्लं गच्छति" इत्यादिवाक्यस्याप्रमाणताऽऽपत्तिः, चैत्रमल्लादिनिष्ठक्रियायाः प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नासमवेतत्वात, तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेनान्वयोपगमासंभवात्, उक्तयुक्त्या संबन्धघटकोपस्थितेरपि शाब्दबोधेऽपेक्षितत्वात्, एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च, प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात् । अन्वयितानवच्छिन्नप्रतियोगितायाः संबन्धत्वासंभवाच्चेति चेत् ? तर्हि क्रियाऽन्वयिभेदप्रतियोगिताऽवच्छेदकत्वमेव द्वितीयार्थोऽस्तु, भेदे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वय इति न काचिदनुपपत्तिः ।

त्यागः । यजतेश्च देवतोद्देश्यकस्वत्वध्वंसफलकत्यागः(१) । जुहोतेश्च तादृशत्यागफलाग्निप्रक्षेपोऽर्थः, अत एव ऋत्विजां तादृशत्यागाभावेऽपि होतृत्वम् ॥ ३२ ॥

इत्थञ्च निर्व्यूढकर्मत्वलक्षणे शिष्यमनुगृह्य धात्वर्थं व्याकृत्य कर्मतालक्षणं आह-यति—**एवमित्यादिना । ददातेरिति** । तादृशत्यागरूपदानं दानपदार्थः, स एव ददातेर्धातोरर्थ इत्यन्वयः, एवमग्रेऽपि । विक्रयवारणाय **मूल्येति** । पशूद्देश्य-कयागकरणस्थले चैत्रः पशुमात्मने ददातीति प्रयोगवारणाय **स्वस्वत्वध्वंसेति** । परस्वत्वोत्पत्तीति पाठे तु—धनद्वारा पशूद्देश्यकयागकरणप्रवर्त्तकस्य परकीयपशु-स्वत्वानुकूलेच्छामादाय धनदाता चैत्राय पशुं ददातीति प्रयोगवारणाय **स्वस्वत्व-ध्वंसेति** । उपेक्षावारणाय **परस्वत्वोत्पत्तीति। देवतोद्देश्यकेति** । देवतेतिस्वरू-पकथनम्, अन्यथा विष्णुं यजते इत्यादौ विष्णुपदार्थानन्वयप्रसङ्गादिति । देवतो-देश्यकस्वत्वध्वंसजनकत्यागरूपधात्वर्थैकदेशस्य देवस्य कर्मणि विष्णावभेदान्वय इति केचिद्वदन्ति, तदत्यन्तमसद्; धात्वर्थस्य धात्वर्थघटकस्य वाऽभेदेन भेदेन वा कार-कपदार्थविशेषणतयाऽन्वयस्य कुत्र चिदप्यक्लृप्तत्वाद् देवतात्वावच्छिन्नविषयतानि-रूपितोद्देश्यतात्वावच्छिन्नविषयताऽऽदिनिरूपितयागत्वावच्छिन्नविषयताकबोधविष-यकसङ्केतग्रहेण विष्णुत्वावच्छिन्नविषयतानिरूपितोद्देश्यतात्वावच्छिन्न—विषयताऽऽदि निरूपितयागत्वावच्छिन्नविषयताकशाब्दबोधस्य कथञ्चिदप्यजननाच्च । यदि देवत्वव्याप्यत्वोपलक्षित—धर्मावच्छिन्नविषयता–निरूपितेत्यादित्यागान्तविषयता-शालिबोधविषयकसङ्केत उपेयते, तदा देवपदार्थविषयकबोधसङ्केतविषयकतया तस्या-न्वयानुसन्धानं वायसदशनानुसन्धानसमानं विष्ण्वाद्युद्देश्यकतादृशत्यागविषयकबो-धस्य तादृशसङ्केतविषयतया यजादिधातोर्डौकादिधातुवदकर्मताऽऽपत्तिश्चेति । न चैवं पितरं यजेतेत्यपि स्याद्, न चेष्ट एव तादृशप्रयोगोऽनुभवविरोधाद्; अत एव जगदीशेन त्यागे मन्त्रकरणकत्वं विशेषणं दत्तमिति वाच्यम्; यजिधातुना तादृशार्थ-बोधने देवादिपदसमभिव्याहारस्य तन्त्रत्वात्, (२)वस्तुतस्तु देवता च उद्देश्यता-

---

(१) अत्र दा धातोर्मूले वक्ष्यमाणसम्प्रदानत्वविवेचनस्थ "स्वस्वत्वध्वंसपूर्वक-परस्वत्वोत्पत्त्यवच्छिन्नत्यागः" इत्येवार्थोऽभीष्टः श्रीमन्माधवेन यद् द्विविधः पाठः स्थिरीकृतः, स तु मूलग्रन्थपरक एवेति बोध्यम् ।

(२)अयं भावः, एतावता प्रबन्धेन "विष्णुं यजते" इत्यादौ विष्णुपदार्थानन्वय-

कस्वत्वध्वंसजनकत्यागश्चोभयमेव यजिधात्वर्थः । तत्र देवतारूपार्थस्य व्युत्पत्तिवैचित्र्याद् विष्ण्वादावभेदेनान्वयः, विष्ण्वादेश्च द्वितीयपदार्थैकदेश उद्देश्यत्वेऽन्वय इति । तादृशत्यागजन्यार्थकफलान्तस्य परिचायकतामात्रं न पुनर्धात्वर्थघटकत्वम्; तथा चाग्निप्रक्षेप एव हुधात्वर्थः, होतृत्वं न यष्टृत्वं देवतोद्देश्यकस्वत्वध्वंसजनकपरित्यागाभावाद्, अत एव ऋत्विग् यजतीति न प्रयोगः ॥ ३२ ॥

स्वमते लाघवप्रकारवाक्यम्—

अग्निप्रक्षेपश्चाग्निवृत्तिसंयोगानुकूलक्रियाऽनुकूलघृतादिवृत्तिनोदनादिव्यापारः । न चैवम्–अग्नौ जुहुयादित्यत्राग्निवृत्तिसंयोगानुकूलक्रियेत्यादिशाब्दबोधे पुनरुक्तिनिबन्धनोऽनन्वयः, धात्वर्थताऽवच्छेदकसंयोगरूपफलशालित्वेनाग्नेरपि कर्मत्वापत्तिश्चेति वाच्यम्, तत्र संयोगावच्छिन्नक्रियाऽनुकूलव्यापारस्यैव धात्वर्थताऽवच्छेदकतया आद्यदोषस्याभावात्, तत्र क्रियाया एव धात्वर्थताऽवच्छेदकतया संयोगस्याऽवच्छेदकताऽवच्छेदकतया तदन्वयिनोऽप्यग्नेः कर्मत्वासम्भवेन द्वितीयदोषस्याभावात् ॥३३॥

घृतादीति स्वरूपकथनं नोदनं विलक्षणसंयोगः, आदिना हस्तक्रियापरिग्रहः । अनन्वय इति । उद्देश्यताऽवच्छेदकविधेययोरैक्यात् शाब्दबोधानभ्युपगमादिति भावः । धात्वर्थतयेति लक्षणयेत्यादिसप्तम्यन्तार्थस्य परम्परयाऽग्निवृत्तित्वस्य नोदनादावन्वयस्वीकारे लक्षणां विनाऽप्युपपत्तिरिति ध्येयम् । द्वितीयदोषस्याभावादिति । कर्मतालक्षणशरीरे साक्षाद् धात्वर्थताऽवच्छेदकत्वस्य निविष्टत्वादिति भावः ॥ ३३ ॥

स्वमते लाघवप्रकारवाक्यम्—

द्वितीयाऽऽद्यर्थश्च वृत्तित्वं तच्च धात्वर्थताऽवच्छेदके फलेऽन्वेति । विप्रा-

---

प्रसङ्गभिया देवतोद्देश्यकस्वत्वध्वंसजनकत्याग एव यजधातोरर्थं प्रतिपाद्य "धात्वर्थस्य तदेकदेशस्य वा कारकपदार्थे विशेषणतयाऽन्वयोऽव्युत्पन्नः" इति नियमस्य "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति" नियमस्य च गुरुणादितमवधार्य "देवतं च देवतोद्देश्यताकस्वत्वध्वंसजनकत्यागश्चोभयमेव यजिधातोरर्थद्वयमाहृतवान् । नन्वेवमपि विष्ण्वादिरूपकारकार्थस्यैकदेशित्वेनोक्तनियमद्वयविरोधः स्यादेवेति वाच्यम्, "संपन्नो व्रीहिः" इत्यनेकव्रीहितात्पर्यकेऽप्येकवचनदर्शनेन तादृशव्युत्पत्तिसङ्कोचस्यावश्यकतयाऽस्याप्येतदन्यस्थलाभिप्रायिकमिति स्वीकारेणादोषात् ।

य गां ददाति, विष्णुं यजते, घृतं जुहोतीत्यादौ विप्रोद्देश्यकगोवृत्तिस्वत्व-त्वध्वंसपूर्वकपरस्वत्वोत्पत्तिफलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यक-स्वस्वत्वध्वंसफलकत्यागानुकूलकृतिमान्, घृतवृत्त्यग्निसंयोगावच्छिन्नक्रि-याऽनुकूलव्यापारानुकूलकृतिमानिति क्रमेणान्वयइत्यादि ॥ ३४ ॥

विप्रोद्देश्यकेति। उद्देश्यत्वं चतुर्थ्यर्थः, तस्य निरूपकत्वसम्बन्धेन त्यागे-ऽन्वयः। गोवृत्तित्वस्य परस्वत्वेऽन्वयः। त्यागानुकूलकृतिमानिति। इदन्त्वि-च्छायाः कृतिजन्यत्वमते, अन्यथा त्यागाश्रय इत्येव तत्र बोधः, एवं परत्रापि बो-ध्यम्। घृतवृत्तित्वस्याग्निसंयोगानुकूलक्रियायामन्वयः ॥ ३४ ॥

स्वमते लाघवप्रकारवाक्यम्—

अत्र (१) देवतायाः स्वत्वस्वीकारे तत्र द्वितीयाऽर्थवृत्तित्वान्वयेनैव वि-ष्णोः कर्मत्वम्, इतरथा तु-उद्देश्यतासम्बन्धेन तादृशस्वत्वध्वंसरूपधात्वर्थ-ताऽवच्छेदकफलवत्त्वात् कर्मत्वम्, अत एव मन्त्रकरणकहविस्त्यागभागि-त्वेनोद्देश्यत्वं देवतात्वमिति मणिकृतः। घृतं जुहोतीत्यत्र धात्वर्थताऽवच्छेद-कीभूताग्निसंयोगानुकूलक्रियाऽऽश्रयत्वात् कर्मत्वम् ॥ ३५ ॥

विष्णोः कर्मत्वमिति। तथा च देवोद्देश्यकस्वस्वत्वध्वंसपूर्वकस्वत्वजनक-त्याग एव यजिधात्वर्थ इति भावः। इतरथा—देवतायाः स्वत्वास्वीकारे। उद्देश्यतेति-उद्देश्यतासम्बन्धेन—स्वजनकत्यागोद्देश्यत्वरूपपरम्परासम्बन्धेनेत्यर्थः। देवतायाः स्वत्वध्वंसजनकत्यागोद्देश्यत्वं न प्रामाणिकमुक्तम्, अत आह—अत एवेति। देव-तायाः स्वत्वध्वंसजनकत्यागोद्देश्यत्वादेवेत्यर्थः। हविस्त्यागः-हविर्निष्ठस्वत्वध्वंस-जनकेच्छा, तज्जन्यफलभागित्वेन—तज्जन्यस्वत्वध्वंसजन्यप्रीतिमत्त्वेन उद्देश्य-त्वम्—इच्छोद्देश्यत्वम्, इच्छा च 'देवो हविर्निष्ठमत्स्वत्वध्वंसजन्यप्रीतिमान् भवतु' इत्याकारिका, सैव च स्वत्वध्वंसजनिका, स्वत्वध्वंसे च तादृशेच्छाजन्यत्वं स्वरूपो-त्कीर्त्तनमात्रं, न तु देवतालक्षणे तन्निवेशः। देवताया जन्यप्रीत्यनभ्युपगमे 'देव-स्तादृशस्वत्वध्वंसजन्यमदीयप्रीतिविषयो भवतु' इत्याकारिकेच्छा बोध्या, तथा च हविर्निष्ठस्वत्वध्वंसजन्यप्रीतिविषयत्वेन उद्देश्यत्वं देवतात्वमिति ध्येयम्। घृतवृत्ती-त्यस्य क्रियायामन्वयः ॥ ३५ ॥

---

(१) विष्णोरुद्देश्यतासम्बन्धेन तादृशस्वत्वध्वंसरूपधात्वर्थताऽवच्छेदकफलव-त्त्वाद् घृतस्य जुहोतीत्यत्रेति क्वचित् सुसङ्गतः पाठो दृश्यते।

स्वमते लाघवप्रकारवाक्यम्—

मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकत्यागो विक्रयः। मूल्यप्रदानपुरःसरस्वत्वोत्पादकस्वीकारः क्रयः। दत्तद्रव्यस्वस्वत्वजनकस्वीकारः प्रतिग्रहः। तथा च गां विक्रीणीते क्रीणाति प्रतिगृह्णाति वेत्यादौ गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमान्, गोवृत्तिमूल्यदानप्रयुक्तस्वत्वावच्छिन्नस्वीकारवान्, गोवृत्तिदानप्रयुक्तस्वत्वजनकस्वीकारवानितिक्रमादन्वयधीः। सर्वत्र धात्वर्थताऽवच्छेदकतत्तत्फलाश्रयत्वेन गवादेः कर्मत्वम्, एवमनयैव दिशा सर्वत्र कर्मत्वमूह्यम् ॥ ३६ ॥

मूल्यग्रहणेति। दानवारणाय प्रयुक्तान्तं त्यागविशेषणं, स्वत्वध्वंसद्वारा जनकत्वलाभाय स्वत्वध्वंसेति, दयाऽन्वितादमूल्यग्रहणप्रयुक्तव्याधधृतपक्ष्यादित्यागवारणाय परस्वत्वजनकेति। (१)प्रतिग्रहवारणाय पुरःसरान्तं, मूल्यदानपूर्वकेति तदर्थः। स्वीकारः,—इदं मम भवत्वित्याकारिकेच्छा। दत्तद्रव्येति। दानप्रयोज्येत्यर्थः। इदञ्च क्रयवारणाय। गोवृत्तीत्यस्य सर्वत्र स्वत्वेऽन्वयः ॥ ३६ ॥

आक्षेपपुरःसरनिराकरणवाक्यम्—

न चैवमपि पतेरधःसंयोगावच्छिन्नस्पन्दात्मकतया तदवच्छेदकीभूताधःसंयोगवत्त्वाद् भूतलादेः कर्मत्वे वृक्षात् पर्णं भूतलं पततीति प्रयोगः स्यादिति वाच्यम्, तथा विवक्षायामिष्टत्वात्, अत एव "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" (पा० २।१।२४) इति सूत्रे पतितशब्दप्रयोगे द्वितीयान्तसमासविधानम् इत्यादि तदुदाहरणञ्च नरकं पतितो नरकपतित इत्यादि साधु सङ्गच्छते। क्वचित् सप्तम्यपि साधुः—भूतले पततीति ग्रामे गच्छतीतिवत् ॥ ३७ ॥

एवं—धात्वर्थताऽवच्छेदकवतः कर्मत्वे। तथाविवक्षायां—तादृशफलाश्रयत्वतात्पर्ये। इष्टत्वाद्—भूतलं पर्णं पततीति प्रयोगस्येत्यादि। नन्वेवमनुभवविरोध-

(१) अयं भावः, यथा कश्चिद्दयालुः प्रार्थितमर्थं प्रदाय लुब्धकेन गृहीतं शुकं मोचयति, तत्र विक्रयलक्षणस्यातिव्याप्तिवारणाय स्वीकृतलक्षणे परस्वत्वजनकेतित्यागविशेषणमुक्तमिति बोध्यम्।

इत्यत आह, **अत एवेति**। पतिधातोः सकर्मकत्वादेवेत्यर्थः। नन्वेवं भूतले पर्णं पततीति प्रयोगस्यानुभवसिद्धतया स न स्यादत आह, **क्वचिदिति**—धात्वर्थपतनादौ परम्परयाऽन्वयतात्पर्यं इत्यर्थः ॥ ३७ ॥

एकदेशिवाक्यम्—

**अन्ये तु तादृशफलशालित्वेऽपि भूतलादेर्न द्वितीया, फलस्य हि सम्बन्ध्याकाङ्क्षायां भूतलादेरन्वयो वाच्यः, प्रकृते चाधःसंयोगरूपफलस्याधोवृत्तितयोपस्थितेराश्रयान्तरनिराकाङ्क्षत्वात् ॥ ३८ ॥**

भूतलस्य पतिधात्वर्थताऽवच्छेदकफलशालित्वेऽपि न तदुत्तरं द्वितीया, इति वदतां मतमाह—**अन्ये त्विति तादृशेति**। पतिधात्वर्थताऽवच्छेदकेत्यर्थः। **निराकाङ्क्षत्वादिति**। गच्छतीत्याद्युक्तौ संयोगावच्छिन्नक्रियोपस्थितौ कस्य संयोग इत्याकाङ्क्षोत्सर्गतो यथा जायते, तथा पतिधातुनाऽधःसंयोगावच्छिन्नस्पन्दोपस्थितौ न तादृशाकाङ्क्षा इति, तादृशाकाङ्क्षास्थले एव द्वितीयानुशासनतात्पर्यमिति भावः ॥ ३८ ॥

प्रकारान्तरवाक्यम्—

**यद्वा—पतिधातोरकर्मकत्वं, कर्त्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वाद्, यथा ग्रामं गच्छतीत्यादौ गम्यादेः। पतिर्हि पर्णगतमधःसंयोगमेव बोधयति, न तु भूतलगतं, भूतलस्याधःसंयोगाभावात्, पर्णस्याधोभूतलमित्येव प्रतीतेः। अत एव भूतले पततीत्येव प्रयोगो न तु भूतलं पततीत्याहुः ॥ ३९ ॥**

अधःसंयोगः कुत्र इत्याकाङ्क्षाया अपि सम्भवादाह—**यद्वेति**। **कर्त्तृभिन्नान्वयीति**। कर्त्तृभिन्नान्वयि यत् फलसंयोगादि तदवच्छिन्नव्यापारबोधकस्यैवेत्यर्थः। तथा च ग्रामं गच्छतीत्यादौ कर्त्तृभिन्नं यद् ग्रामादि तदन्वयिसंयोगादिरूपफलावच्छिन्नव्यापारबोधकत्वाद् गम्यादेः सकर्मकत्वमव्याहतमिति। **गम्यादेरिति**। सकर्मकत्वमिति विभक्तिवैपरीत्येनान्वयः। ननूक्तविवक्षणेन पतेः कथं सकर्मकत्वमित्याशङ्कां निरस्यति पतिर्हीत्यादिना। पर्णगतं—पर्णनिरूपितम्, एतच्चाधःसंयोगएवान्वेति। **बोधयतीति**। यथा च भूतलं पततीत्यादौ अधोऽनुयोगिकसंयोगत्वरूपफलत्वावच्छेदकेनोपस्थितस्य फलस्य वास्तविकपर्णनिरूपितस्यानुयोग्यन्तरान्वयनिराकाङ्क्षतया भूतले तस्यान्वयबाधादेव न तादृशप्रयोग इति भावः। भूतलनिरूपिताधःसंयोगस्यैव तत्र बोध इति भूतलस्य तादृशसंयोगाप्रतियोगितया तत्रान्व-

यो निराबाध एवेत्याशङ्कामपनेतुमाह—न तु भूतलगतमिति । अधःसंयोगं बोधयतीति शेषः । कुत ? इत्याकाङ्क्षायामाह—भूतलस्येति । अधःसंयोगाभावात् पर्णव्यापारप्रयोगाभावादित्यर्थः । एतेन तादृशसंयोगस्य भूतले सत्त्वेऽपि न क्षतिरिति ध्येयम्(१) । ननु पर्णं पततीत्यादिप्रयोगोऽनुपपन्नः, पृथिव्यधोदेशस्यैवाधस्त्वात् तादृशाधःसंयोगानुकूलव्यापारस्य पर्णे बाधितत्वादित्यत आह—पर्णस्याधोभूतलमिति । व्यवहारादित्यर्थः । एतद्-भूतलनिष्ठपर्णाधस्त्वम्, अन्यत्—पृथिव्ययस्त्वादित्यर्थः । इत्येव प्रयोग इति एवकारव्यवच्छेद्यमाह—न तु भूतलमिति । आहुरित्यनेनात्र मते एकोऽस्वरसः सूचितः, स च नरकपतित इतिद्वितीयातत्पुरुषानुपपत्तिरूपः ॥ ३९ ॥

समूहावलम्बनेन प्राचीनोक्तिविवेचनप्रकारवाक्यम्—

प्राञ्चस्तु ग्रामं गच्छति त्यजति गम्यते त्यज्यते वा ग्राम इत्यादौ संयोगविभागयोः फलयोर्द्वितीयाकर्माख्याताभ्यां प्रत्यायनात्, अनन्यलभ्यस्पन्दनाद्यात्मकव्यापार एव तत्तद्धातोरर्थः(२) । न चैवं तत्ताद्धातुयोगे द्वितीयाऽऽदेः संयोगत्वादिना फलविशेषबोधकत्वोपगमेन ग्रामं गच्छति त्यजती-

---

(१) ध्येयपदस्वारस्यन्तु, "भूतलं पतति" इति प्रयोगापत्तिनिराकरणाय पर्णव्यापारप्रयोज्याधःसंयोगाभावस्वरूपकमेवेत्यर्थः ।

(२) अयं भावः, प्राचीनमते "कर्मणि द्वितीया" इत्यनुशासनात् कर्मत्वं द्वितीयाऽर्थः, व्यापारमात्रञ्च धातोरर्थः, तथा च "ग्रामं गच्छती" त्यादौ यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोध इति वचनान्न 'ग्रामं स्पन्दते "इत्यादिना पर्यायत्वम् । ननु यदि धातोः फलवाचकता न स्यात् तदा सर्वेषामेव धातूनां समानार्थकत्वं स्यात्तथा च य एव "त्यजति" पदाद्बोधः स्यात्स एव "गच्छति" पदादपि बोधः स्यात्, एवं त्यागगमनपदादपि, नहि शक्तिभ्रमाद्यजन्मनोस्तादृशवाक्यजन्यबोधयोरवैलक्षण्यं कश्चिदभ्युपैति तथा, सति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्ना अपि प्रयुञ्जीरन् । नच तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियत इति विलक्षणबोधोपपत्तिरिति वाच्यम्, शक्त्याऽविलक्षणबोधजननसंभवेनातिप्रसङ्गस्य दुर्द्धरत्वादिति चेन्मैवम्-कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवलव्यापारे । इति प्रामाणिकानामेकार्थतात्पर्येण स्वारसिको न त्यागगमनादिपदप्रयोगः । इत्यभिप्रायमवधार्यवोक्तं मूले "विभागसंयोगावच्छिन्नस्पन्दशाब्दत्वस्य त्यजिगम्योः कार्य्यताऽवच्छेदकत्वात्" ।

त्याभ्यां ग्रामवृत्तिसंयोगजनकस्पन्दस्य ग्रामवृत्तिविभागजनकस्पन्दनस्य च लाभात् पर्यायतावारणेऽपि—त्यजतिगच्छतीत्यनयोस्त्यागो गमनमित्यनयो-रपि पर्यायत्वं स्यादिति वाच्यम्, विभागसंयोगावच्छिन्नस्पन्दशाब्दत्वस्य त्य-जिगम्योः कार्य्यतावच्छेदकत्वात् । एवञ्च यथायथं विभागसंयोगावच्छि-न्नस्पन्दे लक्षणां विना त्यजतिगच्छतीत्यनयोरबोधकत्वमेव ॥ ४० ॥

**मतान्तमाह,**—प्राञ्चस्त्विति । ग्रामं गच्छति, ग्रामो गम्यते, त्यजति त्यज्यते इत्यादौ संयोगभिागरूपद्वितीयाकर्माख्यातार्थान्वयवशात् तुल्यबोधकतारूपपर्यायता-वारणेऽपि तदसमभिव्याहृतस्थले, गच्छति गमनं त्यजति त्याग इत्यादौ पर्यायता स्यादित्याशङ्कते,—**न चैवमित्यादिना** । ननु त्यजतिगच्छतीत्यनयोरबोधकत्वा-पत्तिः, संयोगादिबोधकपदाभावादित्यतस्तत्रेष्टापत्तिमाह—**एवञ्चेति** । संयोगाद्यव-च्छिन्नस्पन्दशाब्दत्वस्य गम्यादिधातुकार्यतावच्छेदकत्वे चेत्यर्थः। **यथायथमिति** । संयोगावच्छिन्नस्पन्दे गमिधातोः, विभागावच्छिन्नस्पन्दे त्यजिधातोः, लक्षणां विनेत्यर्थः ॥ ४० ॥

समूहावलम्बनेन प्राचीनोक्तिविवेचनप्रकारवाक्यम्—

संयोगाद्यवच्छिन्नस्पन्दशाब्दत्वञ्च जन्यजनकतासम्बन्धेन संयोगादि-स्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वं, तेन गम्यते त्यज्यते वा ग्राम इत्यादौ स्पन्दविशेषणककर्माख्यातार्थसंयोगादिविशेष्यकशाब्दस्य संग्रहः । भावा-ख्यातस्थलेऽपि गमनमित्यादाविव संयोगाद्यवच्छिन्नस्पन्दे धातोर्लक्षणैव ४१

ननु संयोगावच्छिन्नस्पन्दशाब्दत्वं यदि जनकतासम्बन्धावच्छिन्नसंयोगप्र-कारतानिरूपितस्पन्दविषयताशालिशाब्दत्वं तदा, ग्रामो गम्यते इत्यादौ जन्यतास म्बन्धेन स्पन्दप्रकारकसंयोगविशेष्यकशाब्दत्वस्यासंग्रहः । यदि च जन्यतासम्बन्धेन स्पन्दप्रकारकसंयोगविशेष्यकशाब्दत्वं तदा ग्रामं गच्छतीत्यादौ शाब्दबोधासंग्रह इत्यत आह—**संयोगाद्यवच्छिन्नेति** । जन्यजनकभावसम्बन्धेन संयोगस्पन्दो-भयवैशिष्ट्यावगाहिशाब्दत्वं संयोगविषयतानिरूपितजन्यताविषयतानिरूपितजन-कत्वविषयतानिरूपित—स्पन्दविषयताशालिशाब्दत्वं, जन्यतानिरूपितजनकत्वं जनकेजन्यस्य सम्बन्धः, न तु जनकत्वमात्रं, जनकतानिरूपितजन्यत्वं जन्ये जन-कस्य सम्बन्धः न तु जन्यतामात्रम्, इति न किञ्चिदनुपपन्नं, जन्यत्वातिमात्रस्य सम्बन्धत्वे जन्यत्वातिरिक्तसंसर्गावच्छिन्न—संयोगविषयतानिरूपित—जनकत्वातिरि-

त्वसंसर्गानवच्छिन्नक्रियानिष्ठविषयताशालिशाब्दत्वं, संयोगस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वमिति ध्येयम् । नन्वेवं गम्यते इत्यादिभावाख्यातस्थले संयोगावच्छिन्नस्पन्दबोधकत्वं न स्यात् संयोगादिबोधकपदाभावादित्यत आह—भावाख्यातेति ॥ ४१ ॥

आक्षेपपुरःसरनिराकरणप्रकारवाक्यम्—

न चैवं लक्षणयाऽपि गमित्यजिभ्यां त्यागगमनयोरबोधप्रसङ्ग इति वाच्यं, शक्तिलक्षणान्यतरसम्बन्धेन संयोगाद्यवच्छिन्नस्पन्दबोधकत्वानुपपत्तिनिर्णयानन्तरमेव गम्यादिना विभागाद्यवच्छिन्नस्पन्दबोधनात् ॥ ४२ ॥

अबोधप्रसङ्ग इति । तथा च स्पन्दमात्रशक्तस्य गम्यादेः स्पन्दमात्रबोधेनैवोपपत्तौ तत्रानुपपत्त्यभावेन लक्षणाया मानाभावात् संयोगाद्यवच्छिन्नस्पन्दबोधस्याभाव इति भावः । निर्णयानन्तरम् इत्यनन्तरं गम्यादेः स्पन्दे शक्तिग्रहात् स्पन्दोपस्थितौ, संयोगे लक्षणाग्रहात् संयोगोपस्थितौ सत्यामितिपूरणीयम् ॥ ४२ ॥

स्वमते निर्दुष्टकर्मत्वनिर्वचनवाक्यम्—

एवञ्च परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्, अत एव गमिधातोः पूर्वदेशो न कर्मत्वं, तस्य विभागरूपफलेनानन्वयात्, एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्यविजातीयक्रियैवार्थः, तस्य चाधः संयोगरूपफलेन नैवान्वयः । एवं ददातीत्यादेरपि व्यापारमात्रार्थत्वे द्वितीयादीनां तत्तत्फलविशेषान्वयो बोध्य इत्याहुः ॥ ४३ ॥

नन्वेवं धात्वर्थतावच्छेदकरूपफलशालित्वरूपकर्मत्वलक्षणमसङ्गतं, गम्यादेः, स्पन्दमात्रवाचित्वेन धात्वर्थतावच्छेदकफलाभावादित्यतः प्राचीनमते कर्मत्वलक्षणमाह—एवञ्चेति । गम्यादेः स्पन्दमात्रवाचित्वे चेत्यर्थः । परसमवेतेति । गमिधातोरित्युपलक्षणं, स्वन्तरेऽपि बोध्यम् । पतधात्वर्थमाह—एवं पतेरपीत्यादिना । गुरुत्वासमवायिकारणप्रयोज्येत्यस्य क्रियैवार्थ इत्यत्र क्रियायामन्वयः । विजातीयक्रिया जातिविशेषवत्क्रिया, प्रयोज्यत्वञ्च स्वरूपसम्बन्धविशेषोऽनुभवसाक्षिकः । गुरुत्वासमवायिकारणेत्यादिप्रयोज्यान्तं पतनत्वजातिविशेषावच्छिन्नस्पन्दे परिचायकमात्रं न तु शक्यतावच्छेदकघटकं नातो गौरवम् । व्यापारमात्रार्थकत्वादि-

ति । तत्तत्फलविशेषः,—स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्तिरूपः । न च तत्तद्धात्वर्थान्वयिफलशालित्वेनैवोपपत्तौ फलविशेषत्वविशेषणमनर्थकमिति वाच्यं, घृतं जुहोतीत्यादौ धात्वर्थान्वयाग्निसंयोगरूपफलत्वमादायाग्नेः कर्मतावारणाय तादृशपदोपादानात् । न च साक्षाद्धात्वर्थान्वयित्वनिवेशेनैव तद्वारणमिति वाच्यं, तल्लाभायैव तदुपादानात् । अत्र मते आहुरित्यनेनास्वरसः सूचितः, स च गमनं त्यागइत्यादौ लक्षणामन्तरेणाऽपि संयोगाद्यवच्छिन्नस्पन्दबोधस्यानुभवसिद्धतया तदनुपपत्तिरूपः । इदमत्रावधेयं—फलस्य धात्वर्थतावच्छेदकत्वं न सम्भवति, गम्यते ग्राम इत्यादौ स्पन्दजन्यफलवानित्यन्वयबोधानुपपत्तेः । इति फले स्पन्दे चोभयत्रैव शक्तिः, इत्येव प्राचां मतम् ; तदेव सम्यक्, ग्रामं गच्छतीत्यादौ द्वितीयार्थश्चाधेयत्वं तस्य संयोगात्मकफले शक्यार्थेऽन्वयः, तस्य च जनकतासम्बन्धेनापरशक्यार्थे स्पन्देऽन्वयः । गम्यते ग्राम इत्यादौ स्पन्दरूपशक्यार्थस्य जन्यतासम्बन्धेनापरशक्यार्थसंयोगरूपफले, तस्य च ग्रामेऽन्वय इति नान्वयानुपपत्तिरिति केचिद्वदन्ति, तन्न मनोरमं फलावच्छिन्नस्पन्दशक्तिमतेऽपि द्वितीयार्थफले आधेयतासम्बन्धेन ग्रामस्य, तादृशसंयोगस्य च संयोगावच्छिन्नस्पन्देऽन्वयात् ; ग्रामं गच्छतीत्यादौ ग्रामवृत्तिसंयोगानुकूलस्पन्दानुकूलकृतिमानित्यन्वयबोधात् , ग्रामो गम्यते इत्यादौ धात्वर्थसंयोगावच्छिन्नस्पन्दस्याख्यातार्थसंयोगे, तादृशसंयोगस्य च ग्रामेऽन्वयात् , संयोगावच्छिन्न–स्पन्दजन्यसंयोगवानित्यन्वयबोधाच्चानुपपत्तेरभावादिति ध्येयम् ॥ ४३ ॥

## कर्मभेदविवेचनम् ।

कर्मभेदविवेचनवाक्यम्—

कर्म च त्रिविधं, प्राप्यं विकार्यं निर्वर्त्यञ्चेति । संयोगादिरूपक्रियाजन्यफलशालि प्राप्यं, यथा ग्रामं गच्छतीत्यादौ ग्रामादिः । (१)क्रिया यद्ध-

---

(१) अत्रेदं बोध्यम्—यत्र हि क्रियया कर्तुर्व्याप्तिमात्रं निगद्यते ।
न वैकृत्यं न निष्पत्तिस्तत्प्राप्यं समुदाहृतम् ॥

यथा "ग्रामं गच्छति" "रूपं पश्यति" इत्यादि । न चात्र वेदान्तिनये आवरणभङ्गानुकूलो व्यापारश्चाक्षुषज्ञानरूपो दृशिधातोरर्थः । तथा चावरणभङ्गाश्रयत्वाद्रूपादेः कर्मत्वम् । न चैवमीश्वरो रूपं पश्यतीति प्रयोगो न स्यात्, ईश्वरे आवरणाभावेन

र्मनाशकं फलं जनयति तद्विकार्यं, यथा काष्ठं लुनातीति, (१)अत्र काष्ठपदेन लक्षणया अवयवा उच्यन्ते, लुनातिना च आरम्भकसंयोगविरोधिविभागहेतुकुठारादिव्यापारः, तथा च काष्ठावयववृत्तितादृशविभागावच्छिन्नव्यापारानुकूल–कृतिमानित्यन्वयबोधः ॥ ४४ ॥

कर्म विभजते; कर्म चेति । गच्छतीत्यादौ गम्यादेर्ग्रामादिरिति शेषः । घटं जानातीत्यादौ घटादेः स्वमते निर्वर्त्त्यमध्येऽन्तर्भावस्य वक्ष्यमाणत्वान्न विभागव्याघातः, मतान्तरे तादृशकर्मणः प्राप्यान्तर्भाव इति ध्येयम् । विकार्यनिर्वर्त्त्याभ्यासन्यत् कर्म प्राप्यमिति पर्यवसितलक्षणं बोध्यम् । यद्धर्मनाशकमिति । यस्य धर्म इति व्युत्पत्त्या यद्वृत्तिधर्म इत्यर्थः । तद्विकार्यमिति । इदञ्च प्रकृतिकर्मपदेनाप्यभिधीयते । ननु तादृशक्रियया काष्ठनाश एव जन्यते, न तु तद्वृत्तिधर्मनाश इत्यत आह–काष्ठपदेनेति । वस्तुतो ह्यारम्भकसंयोगविरोधिविभागावच्छिन्नव्यापाररूप–"लु" धात्वर्थ–( तावच्छेदक )–फलस्य तादृशविभागस्य काष्ठेऽभावात् तस्य कर्मत्वानुपपत्तिरित्यत आह–काष्ठपदेनेति । काष्ठपदेनावयवलक्षणा तु तादृशविभागे काष्ठावयवस्य समवायसम्बन्धावच्छिन्नाधेयतासम्बन्धेनान्वयाभिप्रायेण, स्वाश्रयारभ्यत्वसम्बन्धावच्छिन्नाधेयतासम्बन्धेनान्वये तु लक्षणां विनैवोपपत्तिरिति ध्येयम्। विरोधीति नाशक इत्यर्थः । तादृशेति । आरम्भकसंयोगनाशक इत्यर्थः ॥४४॥

कर्मभेदविवेचनवाक्यम्—

एवं च प्राप्य–विकार्ययोः कारकत्वात् तादृशफलाश्रयत्वाच्च मुख्यं कर्मत्वम् । निर्वर्त्त्यञ्च निष्पाद्यं, यथा कटं घटं वा करोतीति, अत्र च कृञ्

---

तज्ज्ञानानुकूलव्यापाराभावादिति चेन्न, विषयगुण्ठनपटवद्विषयगतमेवाज्ञानं तदावरणकं नतु पुरुषाश्रितमित्यज्ञानभेदस्वीकारेणेश्वरेऽज्ञानाभावेऽपि विषये तत्सत्त्वात्प्रयोगोपपत्तेः । नच नयनपटलवत्पुरुषाश्रितमेवाज्ञानं, न तदतिरेकेण विषयगताज्ञाने प्रमाणमस्तीतिदोषस्तिष्ठत्येवेति वाच्यम्, तत्राज्ञानारोपेण प्रयोगोपपत्तेः स्वीकारात् । दृश्यते हि पुराणादौ रामकृष्णादीनामपीश्वराणामप्यज्ञानवर्णनमिति दिक् ।

( १ ) अत्रेदं ज्ञेयम्—नच काष्ठं लुनातीति विकार्यं कर्मत्वमयुक्तं क्रियाजन्यफलाश्रयत्वाभावादिति चेन्न, प्रकृतिविकृत्योर्निरूढयाऽभेदविवक्षोत्पत्त्याश्रयत्वात् । अत एव भूषणे–काष्ठानि विकुर्वन्भस्म करोतीत्यर्थो विहितः । तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीतिवत् । एतच्च व्यर्थं पचिरिति भाष्ये प्रक्रम्य व्युत्पादितमित्यास्तां तावत् ।

धातोः फलावच्छिन्नव्यापाराबोधकत्वात् कटादेस्तादृशफलानाश्रयत्वेन गौणं कर्मत्वं, तच्च साध्यत्वेन विषयत्वम् , अत एव वीरणादेरुपादानत्वेन विषयत्वेऽपि वीरणं करोतीति न प्रयोगः ॥ ४५॥

**कारकत्वात्**—क्रियानिमित्तत्वे सति क्रियान्वयित्वात् । मुख्यकारकत्वस्य मुख्यकर्मत्वाघटकत्वादाह—**तादृशफलाश्रयत्वादिति** । मुख्यविकार्यकर्मलक्षणमिदं, न तु मुख्यभाक्तसाधारणं, तत्साधारणलक्षणन्तु अनुपदं दर्शनीयमिति । **निर्वर्त्यञ्च निष्पाद्यमिति** । निष्पत्तिविषयत्वं, कृतिविषयत्वमिति यावत् , इदमपि विकृतिकर्मपदेनाप्यभिधीयते । **तादृशेति** । धात्वर्थतावच्छेदकेत्यर्थः । साध्यत्वेनेति अभेदे तृतीया, विषयत्वमिति, द्वितीयार्थं इति शेषः । **अत एव** । साध्यत्वस्य द्वितीयार्थत्वादेव । **उपादानत्वेनेति** । उपादानत्वाख्यकृतिविषयत्वेन॥ ४५॥

ननु धात्वर्थविधेयत्वेन निर्वर्त्यत्वे घटं पश्यतीत्यत्रातिरिक्तकर्मत्वापत्तिः, धात्वर्थविषयत्वमात्रेण तथात्वे कटं करोतीत्यत्र वीरणं करोतीति प्रयोगापत्तिः, मैवम्; उद्देश्योपादानीयविषयतातिरिक्तविषयत्वेन धात्वर्थविषयस्यैव निर्वर्त्यत्वात्(१) ॥ ४६ ॥

**तथात्वेति**—द्वितीयार्थत्वे । मुख्यभाक्तसाधारणविकार्य्यकर्म्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तत्, तण्डुलानोदनं पचतीत्यादौ पाकक्रियया तण्डुलादिरूपधर्मिणो विनाशादेव ओदनादिरूपवस्त्वन्तरनिष्पत्तिरतः पूर्वभावविशिष्टस्य धर्मिणोऽसत्त्वम् । कुसुमानि स्रजं करोतीत्यादौ काशान् कटं करोतीत्यादौ च कुसुमकाशादेः सत्त्वेऽपि रचनाविशेषविरहरूपस्य कटसन्दर्भाभावरूपस्य च पूर्वभावस्यासत्त्वेन तद्विशिष्टस्यासत्त्वं रचनाविशेषादिनिष्पादकक्रियातो निर्वहति; एवं काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीत्यादावपि काष्ठरूपधर्मिणोऽसत्त्वरूपविकारस्य कुण्डलसन्दर्भाभावरूपविशेषणविशिष्टसुवर्णस्यासत्त्वरूपविकारस्य च क्रियातो निर्वाह इति तेषां सर्वेषामेव विकार्यकर्मता । तदुक्तं,—

"यदसज्जायते पूर्वं जन्मना यत् प्रकाशते ।
तन्निर्वर्त्यं विकार्यञ्च कर्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादि भस्मवत् ।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्" ॥ इति ।

---

( १ ) एतच्चांशः प्राचीनपुस्तके न दृश्यते टीकाऽप्येतस्यालोचनरूपैव ।

अस्यार्थः—यत् पूर्वमसत् पश्चाज्जायते उत्पत्त्याश्रयो भवति, तन्निर्वर्त्त्यम् । ननु सांख्यमते असदुत्पत्त्यभावात् सतो नाशस्याप्यभावः, अत एवोक्तं—

"नासतो विद्यते भावो नाभावो विद्यते सतः ।"

भाव उत्पत्तिः, नाभावो न ध्वंसः । तन्मते जननमरणे आविर्भावतिरोभावरूपे, प्रत्यक्षविषयता आविर्भावः, प्रत्यक्षाविषयता तिरोभावः । तन्मतेऽप्याह—जन्मनेति ।—अभेदे तृतीया । तथाच जन्माभिन्नप्रकाशाश्रयो यत् तन्निर्वर्त्त्यम्, प्रकाशः प्रत्यक्षं, विकार्यञ्च कर्म द्वेधा व्यवस्थितमित्युक्तं दर्शयति—प्रकृतीत्यादि ।—प्रकृतेरुच्छेदं सम्भूतं प्राप्तम् इत्यादिव्युत्पत्त्या प्रकृत्युच्छेदसम्भूतपदेन काष्ठादि बोध्यते, तत् किंस्वरूपमित्यत आह—किञ्चित्काष्ठादि भस्मवदिति ।—भस्मवत् काष्ठादीत्यर्थः । स्वस्मिन् स्वनिष्ठधर्माविरोधिधर्मसन्बन्धरूपविकारसम्पादनेनान्यदपरं, तत् किंस्वरूपमित्याकाङ्क्षायामाह—सुवर्णादिविकारवदिति ।—विकारवत् सुवर्णादेरित्यर्थः । यद्यपि काष्ठादिसुवर्णादीत्येव वक्तुमुचितं, तथापि निर्वर्त्यकर्मस्वरूपज्ञापनाय तथोक्तिरित्यवधेयम् । तण्डुलानोदनं पचतीत्यादौ विकार्यकर्मोत्तरद्वितीयाया नाशकत्वमर्थः । निर्वर्त्यकर्मोत्तरद्वितीयाया उत्पादकत्वमर्थः, तथा च—ओदनोत्पादको यस्तण्डुलनाशकः पाकस्तदनुकूलकृतिमानित्यन्वयबोधः । तण्डुलमोदनं करोति, दुग्धं दधि करोतीत्यादावपि विकार्यकर्मोत्तरद्वितीयाया नाशकत्वमर्थः, निर्वर्त्यकर्मोत्तरद्वितीयाया उत्पादकत्वमर्थः, अन्वयबोधस्तूह्यः ।

काशान् कटं करोति, कुसुमानि स्रजं करोति, सुवर्णं कुण्डलं करोतीत्यादौ काशरूपविकार्यकर्मोत्तरद्वितीयया उपादानत्वाख्यविषयताविशेषमेव बोधयति कटादिरूपनिर्वर्त्यकर्मोत्तरद्वितीयया पूर्ववदुत्पादकत्वमेव कृतौ बोधयति, तथाच काशोपादानककटोत्पादककृतिमानित्याद्याकारकस्तत्र बोधः । अधिकमन्यत्रानुसन्धेयम् ॥ ४६ ॥

सिंहावलोकनेन कारकत्वविवेचनवाक्यम्—

प्राञ्चस्तु कटादेर्गौणकर्मत्वेऽपि कारकत्वोपपत्त्यर्थमवयवे लक्षणा अन्यथा कटस्यासिद्धत्वेनाकारकत्वात् । न चैवं कदाचित् वीरणं करोतीति मुख्य-प्रयोगः स्यादिति वाच्यं, करोतिपद-समभिव्याहृत-कर्मवाचकपदस्यावयवे निरूढलक्षणा-नियमादित्याहुः ॥ ४७ ॥

क्रियानिमित्तत्वे सति क्रियान्वयित्वं, कृत्यर्थकभिन्नसविषयकधातुकर्मण एव गौणकारकत्वं, कृतिकर्मणस्तु मुख्यकारकत्वमेवेति केषाञ्चिन्मतमाह—प्राञ्चस्त्विति ।

कारकत्वापपत्त्यर्थं—मुख्यकारकत्वोपपत्त्यर्थम्, असिद्धत्वेन—करणक्रिया-पूर्ववर्त्तित्वाभावेन, अकारकत्वात्—क्रियानिमित्तत्वाभावेन मुख्यकारकत्वाभावादित्यर्थः, तथाच घटं करोतीत्यादौ घटावयवविषयककृतिमानित्याकारको बोधः । घटावयवस्य कृतिरूपक्रियानिमित्तत्वञ्च स्वसाध्यघटजनकत्वेन बोध्यम् ॥ ४७ ॥

आक्षेप निराकरणप्रकारवाक्यम्,

ओदनं पचतीत्यादौ ओदनपदस्य तण्डुले तदवयवे वा लक्षणा, धातुना च रूपादिपरावृत्तिफलकाऽधःसन्तापनादिः, तथा च धात्वर्थतावच्छेदकरूपादिपरावृत्तिशालित्वात् कर्मत्वं, तत्र च पूर्वरूपविरोधेन रूपान्तरोत्पत्तिर्यदि विकारस्तदा विकार्यमध्ये, अन्यथा तु प्राप्यमध्येऽस्यान्तर्भावः ॥४८॥

पूर्वरूपनाशस्य पूर्वरूपनाशानन्तररूपोत्पत्तिरूपाया वा रूपपरावृत्तेरोदने न सम्भव इत्यतस्तण्डुले इति । तण्डुलस्यापि नाशसम्भवात् तण्डुले रूपनाशो रूपान्तरोत्पत्तिर्वा न सम्भवतीत्यतस्तदवयवे इति । रूपपरावृत्तिः,—रूपनाशानन्तररूपोत्पत्तिः रूपनाशश्च । अधःसन्तापनम्—अग्निसंयोगः । तथा चेति । तण्डुलावयववृत्तिरूपनाशानन्तररूपोत्पत्ति-जनकाग्निसंयोगानुकूलकृतिमान् तादृशावयवरूपनाशानुकूलकृतिमान् वा इत्याकारक ओदनं पचतीत्यादौ शाब्दबोधः । तदा विकार्यमध्ये इति । क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्यमित्युक्तत्वादिति भावः । अन्यथा-पूर्वरूपनाशानन्तररूपोत्पत्तेर्धात्वर्थतानवच्छेदकत्वे, अस्य तण्डुलादिकर्मणः ॥ ४८ ॥

स्तोकं पचतीत्यादौ क्रियाविशेषणे द्वितीया विशेषणविभक्तिवत्प्रयोगः साधु । धात्वर्थे स्तोकस्याभेदः सम्बन्धः नामार्थधात्वर्थयोर्भेदान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् । नीलं घटमित्यादौ विशेषणविभक्तेरभेदार्थकत्वे तु अस्या अप्यभेदार्थकत्वमिति ॥ ४९ ॥

प्रयोगसाधुत्वार्थम्—आकाङ्क्षासम्पादनार्थम् इत्यर्थः । अभेदार्थकत्वमिति—एतत्कल्पे एव निर्भरो बोध्यः, अन्यथा अश्वमेधेन यजेत अतिशयेन मूत्रयतीत्यत्र तृतीया, स्तोकं पचतीत्यादौ द्वितीयेत्यस्यानध्यवसायापत्तेः वैकल्पिकानुशासनाभावादिति ॥ ४९ ॥

## करणत्वविवेचनम् ।

करणत्वे सिद्धान्तवाक्यम्—

(१)करणत्वञ्च कारकान्तरेऽचरितार्थत्वे सति हेतुत्वम् । तत्र चरितार्थत्वञ्च तद्व्यापारमुत्पाद्यैव फलहेतुत्वम् । कर्त्ता हि सिद्धं कुठारादिकं व्यापारयन् छिदालक्षणं फलमुत्पादयतीति करणे चरितार्थो न तु फले । कर्मापि करणे चरितार्थं, कर्मासिद्धौ करणव्यापारसिद्धेः, न हि छेद्यासिद्धौ कुठारादिकरणानां छिदानुकूलव्यापारः सम्भवति, अत एव करणव्यापारविषयत्वं कर्मत्वमिति प्राञ्चः ॥ ५० ॥

करणमाह—कारकान्तरे इति । स्वभिन्नकारके इत्यर्थः । स्वं लक्ष्यत्वेनाभिमतं दात्रादि । हेतुत्वं-फलहेतुत्वं फलं धात्वर्थः करणत्वघटकचरितार्थत्वपदार्थव्याख्यां करोति, तत्रेति । तत्र करणत्वलक्षणे, घटकत्वं सप्तम्यर्थः, स्वभिन्नकारकव्यापारद्वारा तत्क्रियाया अजनकत्वे सति तत्क्रियाया जनकत्वमिति लक्षणस्यार्थः। स्वव्यापारद्वारा छिदादिक्रियाजनकदात्रादावसम्भववारणाय स्वभिन्नकारकार्थकं "कारकान्तर" पदमितीदानीमभिमानः, अत एव दात्रादावेतल्लक्षणस्यासम्भवमभिप्रेत्य दात्रधान्यादिसंयोगस्य लक्ष्यतां स्वीकृत्य कारकान्तरपदं परित्यज्य लक्षणं नि-

---

( १ ) इदमत्र ध्येयम्—वयाकरणनये, कर्त्तुरिच्छाविषयप्रधानीभूतधात्वर्थव्यापाराश्रयत्वं करणत्वमुक्तम् । इत्थञ्च "रामेण बाणेन हतो वाली"त्यादौ रामकर्तृकबाणव्यापारसाध्यप्राणवियोगाश्रयो बालीति शाब्दबोधः । नैयायिकनये तु "कारकान्तरेऽचरितार्थत्वे सति क्रियाहेतुत्वम्, सत्यन्तेन कर्तृकर्मणोः, करणनिष्ठव्यापारद्वाराऽधिकरणस्य, कर्तृकर्मान्यतरनिष्ठव्यापारद्वारा सम्प्रदानस्य, स्वानुमति ( प्रकाशनेने ) च्छोत्पादनद्वारा, अपादानस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा च क्रियाहेतुत्वादतिव्याप्तिवारणम् । अन्ये तु "व्यापारवदसाधारणं कारणं करणम्" घटं प्रति कपालसंयोगवारणाय व्यापारवदिति, ईश्वरज्ञानवारणायासाधारणेति । असाधारणकारणत्वञ्च, कार्यतानवच्छिन्नकार्यतानिरूपितकारणाश्रयत्वमिति वदन्ति ।

अयं कर्त्ता त्रिविधः, केवलः, प्रयोजको हेतुः, कर्मकर्त्ता च । देवदत्तेन हरिः सेव्यत इति शुद्धः । क्रियते हरिणेति प्रयोजको हेतुः । गमयति कृष्णं गोकुलमिति कर्मकर्ता, तत्र देवदत्ताभिन्नाश्रयको हरिकर्मकः सेवनानुकूलो व्यापारः । हर्यभिन्नाश्रयकउत्पादनानुकूलो व्यापारः । गोकुलकर्मकगमनानुकूलकृष्णाश्रयतादृशव्यापारानुकूलो व्यापार इति क्रमेण शाब्दबोधो बोद्धव्यः ।

कृष्यैव दर्शयिष्यते इति । सत्यन्तव्यावृत्तिमाह—**कर्त्ता हीति** । सिद्धमित्यनेन कुठारादेश्छेदनादिक्रियायाः पूर्ववर्त्तित्वज्ञापनेन क्रियानिमित्तत्वरूपं कारकत्वं ज्ञापितम् । व्यापारयन्—कुठारादिनिष्ठसंयोगादिरूपव्यापारं जनयन्नित्यर्थः । करणे चरितार्थः,—करणव्यापारद्वारा फलहेतावानित्यर्थः, न तु । फले—छिदादिक्रियायाम्, अहेतुरिति शेषः । तथा च सत्यन्तदलेनैव तद्वारणं न तु विशेष्यदलेनेति भावः । कर्मणः करणचरितार्थत्वमाह—**कर्मापीति** । कर्म—धान्यकाष्ठादि । **करणव्यापारेति** । दात्रादिजन्यधान्यादिसंयोगादीत्यर्थः । शिष्यस्यान्तःप्रबोधाय पुनः स्पष्टयति—**न हीति** । **अत एव**—कर्मणः करणचरितार्थत्वादेव । **करणव्यापारविषयत्वमिति** । करणजन्यक्रियानुकूलव्यापाराश्रयत्वमित्यर्थः । इदमेव प्राचीनैः करणव्यापार्यत्वशब्देनोच्यते । कर्त्तुरपि दात्रादिजन्यसंयोगादिरूपव्यापारवत्त्वादतिव्याप्तिरिति प्राञ्च इत्यनेन सूचितम् ॥ ५० ॥

आक्षेपनिराकारणप्रकारवाक्यम्—

अधिकरणमपि कर्त्तृकर्मान्यतरव्यापारक्रियानिष्पादकं, यथा गृहे चैत्रः स्थाल्यां तण्डुलं पचतीत्यत्र चैत्रव्यापारसम्पादनेन गृहस्य, तण्डुलस्य व्यापारसम्पादनेन स्थाल्याश्च कारकत्वम् ॥ ५१ ॥

अधिकरणेऽतिव्याप्तिशङ्कां निराकरोति—**अधिकरणमपीति** । क्रियानिष्पादकमिति । तथा चाधिकरणं कर्त्तृकर्मान्यतरचरितार्थमिति भावः । विशिष्य दर्शयति—**गृहे चैत्र इत्यादि** । चैत्रस्थितिरूपव्यापारश्चैत्रसंयोगः, एवमुत्तरत्र, गृहादौ तादृशसंयोगं विना पाकानिष्पत्तेरिति भावः ॥ ५१ ॥

आक्षेप निराकरणप्रकारवाक्यम्—

सम्प्रदानापादानयोश्च न क्रियासामान्यहेतुत्वम् । दानेऽनुमतिप्रकाशनेन कर्त्तुरिच्छामुत्पाद्य सम्प्रदानस्य, पतनाश्रये च पत्रादौ पतनप्रतिबन्धकसंयोगनाशकविभागमुत्पाद्य अपादानस्य, चरितार्थत्वमेवेति ॥ ५२ ॥

विशेष्यदलव्यावृत्तिमाह—**सम्प्रदानापादानयोरिति** । **न क्रियासामान्यहेतुत्वमिति** । न क्रियासामान्यप्रयोजकत्वमित्यर्थः। तथाच यत्र सम्प्रदानस्यानुमतिप्रकाशनद्वारा न दानप्रयोजकत्वं, तत्र सम्प्रदानस्य करणत्ववारणं, यत्र वाऽपादानस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा न पतनप्रयोजकत्वं, यथा ऊर्ध्वक्षिप्तलोष्ठादेर्वृक्षसंयोगानन्तरपतनव्यापारसत्त्वेऽपि वृक्षाल्लोष्ठं पततीत्यादौ वृक्षक-

पापादानवारणञ्च विशेष्यदलेनेति भावः । यत्रानुमतिप्रकाशनद्वारा कर्त्तुरिच्छोत्पादेन दाननिष्पत्तिः, तत्र सम्प्रदानस्य, यत्र वा तादृशविभागद्वारा पतननिष्पत्तिः, यथा वृक्षात् पर्णं पततीत्यादौ, तत्रापादानस्य च वारणं सत्यन्तदलेनैवेत्याह—दाने चे· ति । चरितार्थत्वमेव—कचरित्तृतार्थत्वमेवेत्यर्थः ॥ ५२ ॥

करणं कारकान्तरे न चरितार्थम्, तस्य चरमकारणत्वात्—

**एवञ्च तदनुकूलव्यापारमद्वारीकृत्य तज्जनकत्वं फलायोगव्यवच्छि-न्नकारणत्वं पर्यवसितं करणत्वमिति लब्धम्; एवञ्चैतन्मते चरमकार-णत्वमेव करणत्वमिति कुठारादौ करणपदं गौणमिति ॥ ५३ ॥**

नन्वेवं लक्षणं दात्राद्यसम्भवि, दात्रधान्यादिसंयोगे प्रतियोगिनो दात्रस्यैवानु-योगिनः कर्मणो धान्यादेरपि प्रयोजकत्वात्, स्वभिन्नकारकं यत् धान्यादिकं तद्व्या-पारीभूतस्वजन्यसंयोगद्वारैव दात्रादेः फलप्रयोजकत्वात्, यदि च तत्र तत्तल्लक्षण-कर्त्तृनये दात्रादिकं न लक्ष्यं, तत्र करणत्वव्यवहारः कारणतामात्रनिबन्धनो भाक्तः । लक्ष्यन्तु दात्रसंयोगादिकमित्युच्यते, तदा फलानुकूलव्यापारमद्वारीकृत्य फलजनक-त्वं करणत्वमिति लक्षणेनैव सामञ्जस्ये किं गुरुतरोक्तव्यर्थविशेषणघटितलक्षणेन ? अतस्तथैवाह एवञ्चेति । दात्रादौ लक्षणागमनेन तत्संयोगादेरेव लक्ष्यत्वे चेत्य-र्थः । तदनुकूलेति । फलानुकूलेत्यर्थः । नन्वेतादृशलक्षणस्य प्राचीनाभिप्रायवि-षयत्वे तेषां फलायोगव्यवच्छिन्नकारणत्वरूपकरणलक्षणविरोध इत्यत आह—फलायोगेति ॥ ५३ ॥

**वस्तुतस्तु व्यापारवत्कारणं करणमिति, तेन हस्तादौ कुठारादौ च ना-व्याप्तिः । न चैवमदृष्टद्वारा कार्यमात्रे, विशेषतो ज्ञानेच्छाऽऽदौ मनोयोगद्वारा आत्मनः करणत्वापत्तिः, (१) उपधेयसङ्करस्येष्टत्वात्, अनुकूलकृतिसमवा-यित्वलक्षणकर्त्तृत्वस्य निरुक्तकरणत्वादन्यत्वेनैवोपाध्योरसङ्करात् (२) ॥ ५४ ॥**

---

(१) अयं भावः—कार्यमात्रं प्रति कामिनीजिज्ञासाप्रतिबन्धकवत्, अदृष्टसहकृ-तात्मनोऽपि कार्यजातं प्रति भिन्नतया कारणमिति न्यायसिद्धान्तः । तथा चात्म-विरोधदर्शनेनेत्यरुचेराह "ज्ञानेच्छादा"विति ।

(२) अयमाशयः—उप समीपे (ब्रह्मणि) धेयस्य ध्यातुं योग्यस्य आत्मनः, अथवा उप उपाधेः कर्तृत्वकरणत्वरूपोपाधेः, धेयस्य युक्तस्य आत्मनः सङ्करः तादात्म्यम्, तस्येष्टत्वं सर्वेषां मते इति न काऽप्यनुपपत्तिः ।

कुठारादौ स्वरसतस्तान्त्रिकाणां करणादेरप्रयोगादाह,—वस्तुतस्त्विति—व्यापारेति । व्यापारसम्बन्धेन तत्क्रियाकारणत्वं तत्क्रियाकरणत्वमित्यर्थः । एवं-व्यापारवत्कारणत्वस्य लक्षणत्वे इत्यर्थः । अदृष्टद्वारा कार्यमात्रं प्रति आत्मनः कारणत्वेन करणत्वापत्तिः, एवं ज्ञानेच्छादिकं प्रति मनोयोगद्वारा कारणत्वेन करणत्वापत्तिश्चेत्यर्थः । व्यापारसम्बन्धेन कारणत्वस्य विवक्षितत्वान्न दोषः, आत्मनः कार्यानुकूलादृष्टवत्त्वेऽपि तेन सम्बन्धेन कारणत्वे मानाभावादिति ध्येयम् । उपधेयेति । धर्मीत्यर्थः । सङ्करः—अभेदः, उपाध्योः–कर्त्तृत्वकरणत्वयोः, असङ्करात्–भेदात्, तथा च विवक्षावशात् कर्त्तरि करणत्वव्यवहार इति भावः ॥ ५४ ॥

मतान्तरसाधकवाक्यम्—

**कर्त्तृभिन्नत्वेन करणलक्षणं विशेषणीयमित्यपि कश्चित् । इत्थञ्चानुमितौ व्याप्तिस्मृतिः करणं, परामर्शो व्यापारः, चक्षुरादेश्च चाक्षुषादिज्ञाने चक्षुरादिसंयोगः, श्रोत्रस्य श्रावणज्ञाने(१) श्रोत्रमनः–संयोगः, न तु शब्दो-व्यापारः, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात् न च शब्दश्रावणे शब्दो-व्यापारः, लाघवेन श्रावणत्वावच्छिन्नं प्रत्येव हेतुत्वात्, न तु शब्द-श्रावणत्वावच्छिन्नं प्रति गौरवात् ॥ ५५ ॥**

कर्त्तरि करणत्वव्यवहारमसहमानानां मतमाह—कर्त्तृभिन्नत्वेति । विवक्षावशात् कर्त्तरि करणत्वव्यवहारविषयत्वस्य सर्वसमतत्वात् तदनुपपत्तिरित्यस्वरसः कश्चिदित्युक्त्या सूचितः । इत्थञ्च —व्यापार इत्यनुषज्यते । प्राचीनमतं दूषयति–, नत्वित्यादिना । शब्दं विनाऽपि श्रोत्रेण शब्दाभावश्रावणप्रत्यक्षजननात् तत्र शब्द-रूपव्यापाराभावेन तादृशप्रत्यक्षं न स्यादिति भावः । शब्दो व्यापार इति । इदमुपलक्षणं शब्दध्वंससाक्षात्कारे शब्दध्वंसोऽपि व्यापारो बोध्यः । लाघवेनेति । शब्दश्रावणे शब्दस्य, शब्दध्वंसश्रावणे शब्दध्वंसस्य, शब्दाभावश्रावणे श्रोत्रमनः–संयोगस्य च व्यापारत्वकल्पनापेक्षया श्रवणमनःसंयोगस्यैव श्रावणत्वावच्छिन्नं प्रति व्यापारत्वकल्पने स्फुटतरमेव लाघव मिति भावः ॥ ५५ ॥

---

(१) श्रावणप्रत्यक्षे, शब्दस्याकाशगुणत्वेन तत्र समवायसंबन्धस्य नित्यतया तेन समं नोक्तव्यापारलक्षणं संघटत इत्याशङ्कायामाह—"श्रावणज्ञाने"इति ।

मतान्तरसाधकवाक्यम्—

अन्ये तु कुठारादौ करणे कर्त्तृव्यापारविषयत्वं करणत्वमिति, तच्च फलानुकूलकर्त्तृव्यापारवत्त्वं, कुठारादौ छिदानुकूलकर्त्तृसंयोगः नमनोन्नमनादिमत्त्वमविकल्पम्, न चैवं स्थाल्यादेरधिकरणस्यापि कर्त्तृव्यापार्यत्वात्तत्रातिव्याप्तिः, उपधेयसङ्करस्येष्टत्वात् ॥ ५६ ॥

तच्च कर्त्तृव्यापारविषयत्वञ्च । कर्त्तृव्यापारेति । कर्त्तृव्यापारवत्त्वमित्यर्थः । व्यापारवत्त्वञ्च समवायविषयतान्यतरसम्बन्धेन बोध्यम् । समवायसम्बन्धस्थलमाह—कुठारादाविति । एवम्—ईदृशलक्षणकरणे । अधिकरणस्यापीति । अपिना कर्मादिसंग्रहः । कर्त्तृव्यापार्यत्वादिति । कर्त्तृजन्यतण्डुलसंयोगादिरूपव्यापारवत्त्वादित्यर्थः । उपधेयेति । धर्मिणोऽभेदेऽपि कर्मत्वाधिकरणत्वनिरुक्तकरणत्वादीनाम् उपाधीनां भेदाद् यो विभागव्याघात इति भावः ॥ ५६ ॥

मतान्तरसाधकवाक्यम्—

छिदादौ चेष्टायाः प्रयत्नरूपकर्त्तृव्यापारविषयत्वेन, हस्तादेश्च तज्जन्यचेष्टावत्त्वेन । करणत्वमिष्टमेव, चेष्टया हस्तादिना च छिनत्तीति प्रयोगस्य सर्वसम्मतत्वात् । कर्म्मादौ विवक्षावशात् प्रयोगो भवत्येव, तण्डुलेन स्थाल्यामोदनं साधयति, गवा दानं साधयति, ब्राह्मणेन दानं साधयतीतिप्रयोगात् ॥ ५७ ॥

चेष्टायां कृतिरूपकर्त्तृव्यापारस्य विषयतासम्बन्धेन सत्त्वात्, हस्तादौ च चेष्टारूपकर्त्तृव्यापारस्य समवायेन सत्त्वात्, तयोरपि छिदादौ करणत्वापत्तिमिष्टापत्त्या परिहरति—छिदादाविति । कर्त्तृव्यापारविषयत्वेन विषयतया कर्त्तृव्यापारवत्त्वेनेत्यर्थः । तज्जन्यचेष्टावत्त्वेन—समवायेन कर्त्तृजन्यचेष्टारूपव्यापारवत्त्वेनेत्यर्थः । इष्टमेवेति, कुत इत्याकाङ्क्षायामाह—चेष्टयेत्यादि । कर्त्तृभिन्नकारकस्य विवक्षावशात् करणत्वे इष्टापत्तिमाह—तण्डुलेनेति । साधयतीति सिद्धिरुत्पत्तिः, तथा च या तण्डुलकरणकस्थाल्यधिकरणकान्नोत्पत्तिस्तदनुकूलव्यापारवानित्यन्वयबोधः । न चैवं तण्डुलेन तण्डुलं पचतीति स्थाल्या स्थाल्यां पचतीत्यादिप्रयोगः स्यात्, इष्टत्वात् । तण्डुलकरणकत्वबोधकतण्डुलकर्मकत्वबोधकसामग्र्योः परस्परकार्य्यप्रतिरोधात् नैकदोभयोर्बोध इत्यपि कश्चित् । गवेति ।—गोकरणकदानोत्पत्त्यनुकूलव्यापारवानित्यर्थः । एवमुत्तरत्र ॥ ५७ ॥

मतान्तरसाधकवाक्यम्—

चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगात् कर्त्तुः शरीरस्य च वारणाय द्रव्यासमवायिक्रियानुकूलकृतिमद्भिन्नत्वं(१) विशेषणं देयम् । कृतिमत्त्वञ्च समवायेनावच्छेदकतया च बोध्यम्, तेनात्मनः शरीरस्य च व्युदासः, विशिष्टाभावाच्च(२) हस्तादिसंग्रहः, इदञ्च न व्याप्तिस्मृत्यादिसाधारणं, तत्र पूर्वनिरुक्तमेव करणत्वम्, इत्थञ्च करणपदं नानार्थमेवेत्याहुः ॥ ५८ ॥

ननु कर्त्तुरपि करणत्वापत्तिः, आत्मनि कर्त्तरि कृतिरूपकर्तृव्यापारस्य, कर्तृशरीरे च चेष्टारूपकर्तृव्यापारस्य सत्त्वादित्यत आह—चैत्र इति । चैत्रेणेति—चैत्रशरीरेणेत्यर्थः । द्रव्यासमवायीति । द्रव्यासमवायित्वविशेषणविरहाद् विशिष्टाभावो हस्तादेरिति भावः । ननु व्याप्तिस्मृतावनुमितिकरणत्वं न स्यात्, तत्र कर्तृव्यापारानाश्रयत्वादित्यत आह—इदञ्चेति । तत्र—व्याप्तिस्मृतौ । निरुक्तमिति । वस्तुतस्त्वित्यादिनोक्तं व्यापारवत्कारणत्वं करणत्वमित्यर्थः । नानार्थमिति । इष्टमेवेति शेषः । अत्र च आत्मानमात्मना वेत्सीत्यादि महाकवि-कालिदासप्रयोगानुपपत्तिश्चिन्त्या ॥ ५८ ॥

मतान्तरसाधकवाक्यम्—

परशुना छिनत्तीत्यादौ निरुक्तकरणत्वं तृतीयाऽर्थः । प्रकृत्यर्थस्य तत्राश्रयत्वेन, धात्वर्थस्य छिदादेश्च निरूपकत्वेनान्वयः, इत्थञ्च परशुनिष्ठकरणत्वनिरूपक-छिदानुकूलकृतिमानित्यन्वयधीरिति प्राञ्चः ।

परशुना छिनत्ति न दात्रेणेत्यादौ निरूपकत्वादेः (संसर्गस्य) प्रतियोगितावच्छेदकसम्बन्धत्वाभावाद् नञर्थानुरोधेन निरुक्तकरणतानिरूपितजन्यत्वमेव तृतीयाऽर्थः । तत्र निरूपकतया प्रकृत्यर्थस्य आश्रयतया च धा-

(१) समवायसम्बन्धेन द्रव्यवदन्यत्वविशिष्टकृतिमद्भिन्नत्वमित्यर्थः । कृतिमत्त्वञ्च समवायेऽवच्छेदकतान्यतरसम्बन्धेन, कृतौ द्रव्यत्वं वैशिष्ट्यञ्च, सामानाधिकरणत्वसम्बन्धेन ।

(२) अयं भावः—कृतिमदन्यत्वमात्रोक्तौ हस्तादेरपि उक्तान्यतरसम्बन्धेन कृतिमत्त्वेन असंग्रहः स्यात् इति कृतौ द्रव्यवदन्यत्ववैशिष्ट्यमुक्तम्, तथाच हस्तादौ कृतिमत्त्वसत्त्वेऽपि द्रव्यवदन्यत्वस्य असत्त्वेन द्रव्यवदन्यत्वविशिष्टकृत्यभावात् तादृशकृतिमदन्यत्वस्य निराबाधात् ।

त्वर्थस्यान्वयः, इत्थञ्च परशुनिष्ठकारणतानिरूपितजन्यताश्रय-च्छिदानुकूल-कृतिमानित्यन्वयधीरिति नव्याः ॥ ५९ ॥

प्राचां मते परशुना छिनत्तीत्यादौ शाब्दबोधमाह—परशुना छिनत्तीत्यादाविति । निरुक्तकरणत्वं व्यापारवत्कारणत्वरूपं तज्जन्यव्यापारवत्कारणत्वरूपं वा करणत्वमित्यर्थः । प्रकृत्यर्थस्य—परश्वादेः, तत्र—करणत्वे, आश्रयत्वेन—आधेयत्वेन तथाच प्रकृत्यर्थस्य आधेयत्वसम्बन्धेन तृतीयार्थे करणत्वे, तादृशकरणत्वस्य निरूपकत्वसम्बन्धेन धात्वर्थे, धात्वर्थस्य कृतौ, कृतेश्च प्रथमान्तपदोपस्थाप्येऽन्वय इत्यर्थः । निरुक्तकरणतानिरूपितेति । परशुनिष्ठकरणतानिरूपितेत्यर्थः । एतच्च तृतीयार्थजन्यत्वस्य परिचायकमात्रं न तु तृतीयार्थे तस्य प्रवेशः, अन्वयादेव तस्य लाभादित्यवधेयम् । तत्र—तादृशजन्यतायां, निरूपकतया—निरूपितत्वसम्बन्धेन, स्वविशेष्यान्वयिनोऽन्वयित्वरूपविशेषणत्वनियमेन निरूपितत्वसम्बन्धेन परशुनिष्ठकरणतावत्वादेव करणतानिरूपितत्वं जन्यताया इति सूचयितुं जन्यतायां निरूपितान्तप्रदर्शनम् । तथाच परशुनिरूपितं यद् जन्यत्वं तदाश्रय-च्छिदानुकूलकृतिमानित्यन्वयधीरेव नव्यमतसिद्धेति ॥ ५९ ॥

मतान्तरसाधकवाक्यम्—

जटाभिस्तापस इत्यत्र तृतीया न करणत्वे किन्तु विशेषणत्वे । तच्च प्रकृते वैशिष्टचरूपं जटाभिस्तापस इत्यस्य जटाविशिष्टस्तापस इत्यर्थः । अत्र चोपलक्षणत्वेनाभिधानम् । उपलक्षणत्वञ्च बोध्येतरव्यावृत्त्यनवच्छेदकत्वे सति तत्समानाधिकरणत्वम् । जटाया अतापसव्यावृत्त्यनवच्छेदकत्वात् । शमदमादिमत्त्वस्यैवातापसव्यावृत्त्यन्यूनानतिरिक्तवृत्तित्वेनावच्छेदकत्वात् ॥ ६० ॥

कारकार्थनिर्णय इत्यादिपदप्राप्तोपपदविभक्त्यर्थं प्रसङ्गादाह—जटाभिरित्यादिना । न करणत्वे इति—तत्र सप्तम्यर्थो बोधकत्वं, तथाच करणत्वबोधिका तृतीया नेत्यर्थः, असम्भवादिति भावः । प्रकारत्वरूपविशेषणत्वं प्रकृतेऽसम्भवीत्यत आह—तच्चेति—विशेषणत्वञ्चेत्यर्थः । जटाविशिष्ट इति—जटासम्बन्धवत्तापस इत्यर्थः । नन्वेवं शमदमादिना तापस इत्यपि प्रयोगः स्यादित्यत आह—अत्र चेति—अव्यवहितपूर्वोक्तजटासम्बन्धविषयताशालिबोधे इत्यर्थः । सप्तम्यर्थो निष्ठत्वम् । उपलक्षणत्वेन—उपलक्षणत्वविषयतावत्ताभिप्रायेण, अभि-

धानं—तृतीयाविधायकसूत्राभिधानमित्यर्थः । उपलक्षणत्वस्य स्वविशेष्यान्वयित्वरूपस्य प्रकृते विवक्षणे शमदमादिना तापस इत्यादिप्रयोगस्य वारणासम्भवादाह—उपलक्षणत्वञ्चेति । बोध्यः—तापसः, व्यावृत्तिः—भेदः, तथा च प्रकृते तापसेतरभेदानवच्छेदकत्वे सति तापसेतरभेदसमानाधिकरणत्वं पर्य्यवसितम् , अवच्छेदकत्वञ्चान्यूनानतिरिक्तवृत्तित्वरूपं ग्रन्थकृतैवानुपदं व्यक्तीकरिष्यते, तद्व्यक्तित्वेन तापस इत्यादि प्रयोगाय अन्यूनत्वनिवेशः, प्रमेयत्वेन घट इत्यादिप्रयोगाय अनतिरिक्तत्वनिवेशः, घटत्वेन पट इत्यादिप्रयोगवारणाय बोध्येतरभेदसामानाधिकरण्यनिवेशः । इदमत्रालोचनीयं,—जटाभिस्तापस इत्यादौ तृतीयार्थः सम्बन्धमात्रं, तत्र तापसेतरभेदान्यूनवृत्तिभिन्नतापसेतरभेदानतिरिक्त-वृत्तिभिन्न-तापसेतरभेद-समानाधिकरण-जटाप्रतियोगिकत्वं जटायाः संसर्गः, तावतैव तादृशोपलक्षणत्वबोधोत्पत्तिः, तथाच तादृशसंसर्गेण जटाविशिष्टो यः सम्बन्धः तद्वान् तापस इत्येवाकाङ्क्षा[?]चित्र्यात्तत्र बोधः, न तु तादृशोपलक्षणत्वस्यापि तृतीयार्थतामुपगम्य तापसेतरव्यावृत्त्यनवच्छेदकतादृशभेदसमानाधिकरणजटासम्बन्धवान् इत्याकारको बोधः, तथा सति संख्याऽतिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यत्वेनैवान्वयस्यैव व्युत्पत्तिसिद्धत्वेन तादृशव्युत्पत्तिविरोधापत्तेः, सम्बन्धतावत्तादृशतृतीयार्थभेदं निवेश्य व्युत्पत्तिकल्पने गौरवात् , तापसादिरूपविशेष्यभेदेन शक्त्यानन्त्यापत्तेः, उक्तप्रकारेणैव सामञ्जस्ये तादृशार्थे तृतीयाशक्तिकल्पनाया अन्याय्यत्वाच्चेति । अथ घटत्वेन पट इत्यादौ पटेतरव्यावृत्त्यनवच्छेदकघटत्वप्रतियोगिकत्वसम्बन्धेन घटत्वविशिष्टसम्बन्धवान् पट इत्येतादृशबोधस्यैव स्वीकरणीयतया तादृशसम्बन्धेन घटत्वविशिष्टसम्बन्धस्य पटेऽसत्त्वादेव तादृशप्रयोगवारणसम्भवेनोपलक्षणत्वघटकतया तादृशभेदसामानाधिकरण्यविशेषणं व्यर्थमिति चेन्न, तस्य तत्रैव तात्पर्यात् , घटत्वं पटे उपलक्षणम् इत्यादि व्यवहारवारणाय तादृशभेदसामानाधिकरण्यरूपविशेष्यदलमित्यपि कश्चित्। जटायां निरुक्तोपलक्षणत्वसत्त्वं दर्शयति—जटाया इत्यादि । जटाशून्यतापसे तापसेतरभेदसत्त्वाद् जटायास्तादृशभेदान्यूनवृत्तिभिन्नत्वात् , तापसेतरेऽपि जटासत्त्वाद् जटायास्तादृशभेदानतिरिक्तवृत्तिभिन्नत्वाच्च निरुक्तोपलक्षणत्वं जटायामबाधितमेवेति भावः । शमदमादिसत्त्वे तादृशोपलक्षणत्वस्यासत्त्वं दर्शयति—शमदमादीति । अन्यूनानतिरिक्तवृत्तित्वेनेति अभेदे तृतीया, तादृशान्यूनानतिरिक्तवृत्तित्वाभिन्नावच्छेदकत्वादित्यर्थः ॥ ६० ॥

मतान्तरसाधकवाक्यम्—

न चैवं शमदमादिना तापस इति न स्यात्, इष्टत्वात् । विवक्षावशादुक्तप्रयोगस्येष्टत्वे च विशेषणोपलक्षणसाधारणं वैशिष्ट्यमात्रं न तूपलक्षणतामात्रं नियामकम् ।। ६१ ।।

एवं—शमदमादिमत्त्वस्य तापसादीतरव्यावृत्त्यवच्छेदकत्वे इत्यर्थः । विवक्षावशात्—प्रतियोगिकत्वमात्रसंसर्गेण शमदमादिमत्त्वप्रकारेण तृतीयार्थविशेष्यप्रकारकबोधतात्पर्यवशात्, उक्तप्रयोगस्य—शमदमादिना तापस इत्यादिप्रयोगस्य । विशेषणोपलक्षणेति—विशेषणं—विशेष्यतापसादीतरव्यावृत्त्यवच्छेदकं शमदमादीत्यर्थः । उपलक्षणं—विशेष्यतापसादीतरव्यावृत्त्यनवच्छेदकं जटादीत्यर्थः । तत्साधारणं—प्रतियोगिकत्वसम्बन्धेन तत्प्रकारकबोधवृत्ति, वैशिष्ट्यमात्रं—वैशिष्ट्यविषयतामात्रं । निरुक्तोपलक्षणत्वविषयत्वाघटितवैशिष्ट्यविषयताघटितमात्रम् इति यावत्, नियामकं—जन्यतावच्छेदकं, वैशिष्ट्यार्थकतृतीयाघटितवाक्यस्येति शेषः। उपलक्षणता—मात्रंनिरुक्तोपलक्षणत्वविषयताघटितधर्ममात्रं, न नियामकं—न जन्यतावच्छेदकमित्यर्थः । वैशिष्ट्यार्थकतृतीयाघटितवाक्य । स्येति शेषः, तथा च शमदमादिना तापस इत्यादिप्रयोगस्य प्रामाणिकत्वे तादृशतृतीयाघटिताकाङ्क्षायाः प्रतियोगित्वसम्बन्धेन तादृशतृतीयाप्रकृत्यर्थविशिष्टविषयताशालिशाब्दत्वमेव जन्यतावच्छेदकं वाच्यम्; तच्च रूपम् उपलक्षणत्वविषयताशालिशाब्दत्वमेव जान्यतावच्छेदकं वाच्यम्; तच्च रूपम् उपलक्षणत्वविषयता-शालिबोध-तात्पर्यस्थलीय-बोध-साधारणं, न तूपलक्षणत्वविषयताघटिततादृशविषयताशालिशाब्दत्वस्य तादृशतृतीयाघटिताकाङ्क्षाजन्यतावच्छेदकत्वं स्वीकरणीयमिति हृदयम् । इदन्तु बोध्यम्—वैशिष्ट्यञ्चात्र नाधिकरणत्वं सम्बन्धितामात्रं वा, प्रमेयत्वेन घट इत्यपि प्रयोगापत्तेः, परन्तु अतद्व्यावृत्तत्वं, तथाच जटाभिस्तापस इत्यादौ अजटव्यावृत्तिमान् तापस इत्याकारकान्वयबोधो दर्शितः तत्र । अजटव्यावृत्तिमान् जटाभावाभाववानित्यथः। प्रमेयत्वाभावाप्रसिद्ध्या प्रमेयत्वाभावाभावबोधासम्भवेन न तादृशप्रयोगः । अथाभावत्वावच्छिन्नाभावो न तृतीयार्थः, तस्याप्रसिद्धत्वात्, नाप्यभावप्रतियोगिकाभावः घटत्वेन पट इत्यपिप्रयोगापत्तेः, घटत्वाभावप्रतियोगिकाभावस्य पटे सत्त्वात्; नापि जटाद्यभावः, प्रकृत्यर्थस्य जटाया अन्वयानुपपत्तेः, (१)शक्त्या

---

(१) पूर्वम् बहुश एकदेशान्वयस्य समाहतत्वेनात्र अभावत्वावच्छिन्नाभावरूपविभक्त्यर्थकदेशे जटायामभेदेनान्वयश्चेत्तदा शक्त्यानन्त्यापत्तिः स्यादेवेति भावः ।

न्त्यापत्तेश्च, मैवं, स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्ध एव तृतीयाऽर्थः, अवच्छेदकता चाभाववत्तासम्बन्धावच्छिन्ना ग्राह्या, तथा च जटाभिस्तापस इत्यादौ अभावत्वसम्बन्धावच्छिन्न-जटानिष्ठावच्छेदकताकभेदवान् तापस इत्याद्याकारकस्तत्र बोध इत्यलमप्रस्तुताभिधानेनेति ॥ ६१ ॥

मतान्तरसाधकवाक्यम्—

अक्ष्णा काणः, पादेन खञ्जः, मुखेन त्रिलोचन इत्यादौ वपुषा चतुर्भुज इत्यादौ च । "येनाङ्गविकारः" ( २।३।२० पा० ) इति सूत्रेण तृतीया, येनाङ्गेनाङ्गिनो विकारो हानिराधिक्यं वा लक्ष्यते, तदङ्गवाचकाच्छब्दात् तृतीया इति सूत्रार्थः, इत्थञ्च तृतीयाया वृत्तित्वमर्थः, तच्चेह व्युत्पत्तिवैचित्र्यात् कारणादिपदार्थैकदेशे विकार एवान्वेति ॥६२॥

इत्थञ्चेति—निष्कृष्टे सूत्रार्थे चेत्यर्थः । ननु तादृशान्वयस्य व्युत्पत्तिविरुद्धत्वादाह—व्युत्पत्तीति ॥ ६२ ॥

मतान्तरसाधकवाक्यम्—

काणत्वञ्च बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वं, जातप्रसिद्धान्धस्य काणत्वे तु चक्षुष्मद्गोलकवत्वे सतीति विशेषणीयम् । एकेनार्द्धेन वा चक्षुषाऽपश्यन्नपि काण एव, एकगोलकेऽर्द्धगोलक एव वा चक्षुरभावात् । गोलकोपघातेऽपि तदवच्छेदेन चक्षुरभावात् । काण एव यदि च तद्गोलकेऽवच्छेदेन चक्षुःसत्त्वेऽपि उपघातादेव च न चाक्षुषं, तदोपहतगोलकवत्त्वमेव काणत्वम् ॥ ६३ ॥

बहिरिति—गोलकस्य बहिरवयवावच्छेदेनेत्यर्थः, बहिःपदस्य बाह्यवस्तुघटादिपरत्वे निमीलितनयनस्यापि तादृशबहिरवच्छेदेन गोलकस्य चक्षुरभाववत्त्वात् तस्य काणत्वापत्तिवारणं न सम्भवतीति बोध्यम् । पश्चादन्धस्य काणत्वस्येष्टत्वादाह—जातेति । जन्मान्धस्येत्यर्थः, जन्मावधिदर्शनाभाववत इति यावत् । विशेषणीयमिति । काणपदशक्यताऽवच्छेदकगर्भे इति शेषः । एकगोलकेऽर्द्धगोलके वा बहिरवच्छेदेन चक्षुरभाववत्त्वात् तस्य काणत्वापत्तिमिष्टापत्त्या परिहरति—एकेनेति । ननु गोलके उपघातरूपदोषाद् यत्र न चाक्षुषं तत्र बहिरवच्छेदेन चक्षुःसत्त्वात् काणत्वं न स्यादत आह—गोलकोपघात इति । चक्षुःसत्त्वेऽपि दर्शनप्रतिबन्धकपित्तादिदोषरूपे गोलकोपघात इत्यर्थः । तदवच्छेदेन चक्षुरभावा-

दिति—बहिरवच्छेदेन तत्र चक्षुरभावस्यैव कल्पनादिति भावः । तादृशकल्पनायां मानाभावे त्वाह—यदि चेति । वस्तुतः फलाभावेन तत्र बहिरवच्छेदेन चक्षुरभावकल्पनसम्भवाद् यदि चेत्युक्तम् । तद्गोलक इति । अवच्छेदेन—बहिरवच्छेदेनेत्यर्थः । उपघातादेव—तादृशपित्तादिरूपदोषादेवेत्यर्थः । उपहतगोलकवत्त्वेनेति अभेदे तृतीया, काणत्वं—काणपदार्थताऽवच्छेदकम् , उपहतगोलकवत्त्वाभिन्नं काणपदार्थताऽवच्छेदकमिति समुदायार्थः ॥ ६३ ॥

मतान्तरसाधकवाक्यम्—

अक्ष्णेति पदसमभिव्याहारस्थले च काणपदं चक्षुःशून्यत्वविशिष्टस्य वा बोधकम् । अक्षिपदञ्च यदा कदाचिच्चक्षुष्मद्गोलकपरम् । एवञ्च तादृशगोलकवृत्ति चक्षुःशून्यत्वम् उपघातो वा तद्विशिष्टवानिति अक्ष्णा काण इति वाक्यार्थः ।

एवं खञ्जत्वं तथाविधसंस्थानशून्यपदवत्त्वम् । पादेनेत्यादिसमभिव्याहारस्थले च तादृशसंस्थानशून्यवानेव खञ्जपदार्थः । तथा च पादवृत्ति यत् तथाविधसंस्थानशून्यत्वं तद्विशिष्टवानित्यर्थः । त्रिलोचन इत्यस्य बहुव्रीहिणा लोचनत्रयवानित्यर्थः ।

तथा च मुखवृत्तिलोचनत्रयविशिष्टवानिति मुखेन त्रिलोचन इति वाक्यार्थः, एवमन्यत्राप्यूह्यम् ॥ ६४ ॥

अक्ष्णा काण इत्यादौ अक्षिपदस्य गोलकपरतया काणपदस्य शक्यार्थपरतया गोलकवृत्तिचक्षुःशून्यत्ववद्गोलकवानित्येव बोधो जायते, तत्राधिकविषयताकल्पनविद्वेषात काणपदस्य लक्षणया चक्षुःशून्यत्वविशिष्टवत्परताम् , अक्षिपदस्य चक्षुष्मद्गोलकपरताञ्चाह—अक्ष्णेतीति । बोधक इति—लक्षणया बोधकमित्यर्थः । तादृशगोलकेति । चक्षुष्मद्गोलकेत्यर्थः । न चान्यपुरुषीयचक्षुष्मद्गोलकवृत्ति यच्चक्षुःशून्यत्वं तद्विशिष्टहस्तादिमति काणभिन्ने तथा व्यवहारापत्तिरिति वाच्यं, चक्षुःशून्यत्वे तादृशगोलकवृत्तित्वं नोपलक्षणविधया विवक्षितम् , अपि तु विशेषणविधया, तथा च चक्षुष्मद्गोलकवृत्तित्वविशिष्टचक्षुःशून्यत्ववत्त्वं तादृशगोलकस्यैव, न तु हस्तादेरित्यतिप्रसङ्गाभावात् । इदमत्रावधेयं यत्पुरुषीयैकगोलकस्य कदाचिदपि चक्षुष्मत्त्वं तत्र तादृशव्यवहारस्य सर्वानुभवसिद्धतया तादृशव्यवहारानुपपत्तिरिति स्वातन्त्र्येण काणपदार्थगर्भे चक्षुष्मद्गोलकवतो निवेश आवश्यकः । जात-

प्रसिद्धान्धस्य तादृशव्यवहाराविषयत्वे क्षतिविरहात्, अक्षिपदं वा गोलकमात्रपरमिति । तथाविधेति—साहजिकेत्यर्थः । मुखवृत्तीति । समासैकदेशीभूतलोचनत्रयान्वितं प्रतियोगिपदत्वादिति ध्येयम् । अन्यत्र—पृष्ठेन कुब्ज इत्यादौ ॥ ६४ ॥

मतान्तरसाधकवाक्यम्—

अक्ष्णा काण इत्यादौ पूर्वनिरुक्ता एव पदार्थाः । तृतीया अभेदे । तथा च तादृशगोलकाभिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानित्यर्थः । मुखेन त्रिलोचन इत्यत्र त्रिलोचनपदं लोचनत्रयविशिष्टवत्परम् । तथा च मुखाभिन्नलोचनत्रयविशिष्टवानिति वाक्यार्थः । एवं पादेन खञ्ज इत्यादावपि स्वयमूहनीयमित्यपि कश्चित् ॥ ६५ ॥

मतान्तरमुपन्यस्यति—अक्ष्णेति । पूर्वमताद्वैलक्षण्यमाह—तृतीयेति । तादृशगोलकेति । चक्षुष्मद्गोलकेत्यर्थः । मुखेन त्रिलोचन इति । अत्र त्रिलोचनपदस्य लोचनत्रयवत्त्वेन पुरुषपरत्वे तत्र मुखाभेदस्य बाधापत्तिरतो बहुव्रीह्युत्तरम् अर्शआदित्वादच्प्रत्ययं स्वीकृत्य लोचनत्रयविशिष्टवत्परताम् आह—मुखेन त्रिलोचन इत्यत्रेति । एवं पादेन खञ्ज इत्यादावपि प्रत्यय ऊहनीय इति पाठः कस्यचिन्मतान्तर्गतः क्वचित् पुस्तके दृश्यते । अत्र प्रत्यय इति, पादाभिन्नं सहजसंस्थानशून्यं तद्वानित्यादिप्रत्यय इत्यर्थः । कश्चिदित्यनेनास्वरसः सूचितः, स च तादृशबोधस्यानुभवेनास्पर्शः, लोचनत्रयविशिष्टवत्त्रिलोचनपदार्थस्य एकदेशेऽभेदान्वयस्य ऋद्धस्य राजमातङ्गा इत्यत्रेवाव्युत्पन्नत्वं, त्रिलोचनपदार्थगर्भे अधिकपदार्थप्रवेशेन गौरवं वाऽस्वरसः कश्चिदित्युक्त्या सूचित इत्यपि कश्चित्, तच्चिन्त्यम् ॥ ६५ ॥

मतान्तरसाधकवाक्यम्—

धनेन कुलं, विद्यया यश इत्यादौ तृतीया हेतुत्वे । "कर्त्तृकरणयोस्तृतीया" ( २।३।१८ पा० ) इत्यत्र क्रियासाकाङ्क्षतया निरुक्तकरणत्वे तृतीया विहिता । अत्र तु नामार्थेनापि साकाङ्क्षतया हेतुत्वसामान्ये "हेतौ" ( २।३।२३ पा० ) इति सूत्रेण तृतीया विहितेति भेदः ॥ ६६ ॥

हेतुत्व इति । ननु हेतुत्वार्थकतृतीयाविधायकं हेताविति सूत्रं व्यर्थं, कर्त्तृकरणयोस्तृतीयेति सूत्रेण करणत्वरूपहेतुत्वे एव तृतीयासम्भवादित्यत आह—कर्त्तृकरणयोरिति । निरुक्तकरणत्वे—व्यापारवत्कारणत्वादिरूपे । नामार्थेनापीति ।

अपिना क्रियासाकाङ्क्षत्वपरिग्रहः, तथा च यत्र नामार्थसाकाङ्क्षत्वं, कारकस्य क्रियासाकाङ्क्षतया तत्र कर्त्तृकरणयोरिति सूत्राविषयतया न हेताविति सूत्रवैयर्थ्यं सामान्यविशेषभेदादिति भावः ॥ ६६ ॥

मतान्तरसाधकवाक्यम्—

सहशब्दस्य पुत्रेण सहागत इत्यादौ तृतीयायाः कर्त्तृत्वमर्थः । समभिव्याहृतक्रियागमनादि, तस्य च वर्त्मादिरूपैकदेशावच्छेदेनैककालीनत्वसम्बन्धेन समभिव्याहृतक्रियायामन्वयः । एवञ्च पुत्रकर्त्तृकताद्दशागमनसमानकालीनागमनकर्त्तेत्यन्वयबोधः ।

क्रिया—आगमनादिरित्यर्थः, समभिव्याहृतेति । सहशब्दसमभिव्याहृतेत्यर्थः । क्रिया । आगमनादिरूपेत्यर्थः । तृतीयार्थस्य—कर्त्तृत्वस्येत्यर्थः । अथ तृतीयार्थकर्त्तृत्वस्य क्रियासाकाङ्क्षतया कथं नामार्थान्वयसम्भव इति चेत्, पञ्चम्यर्थावधित्वस्यापि क्रियासाकाङ्क्षतया अयमस्माद् दीर्घ इत्यादौ कथं नामार्थान्वयसम्भवः ? तत्र व्युत्पत्तिवैचित्र्येण नामार्थान्वयस्वीकारेऽत्रापि (१)तथेत्यवधेयम् । ऊह्यमिति । पुत्रकर्त्तृकभोजनकालीनभोजनवानित्याकारकस्तत्र बोधः ॥ ६७ ॥

मतान्तरसाधकवाक्यम्—

वस्तुतस्तु सहशब्दस्यापेक्षाबुद्धिविशेषविषयत्वादिरूपं (२)साहित्यमर्थः । तृतीयायाश्च वृत्तित्वं सङ्ख्यामात्रं वा । सहशब्दार्थस्य । सम्बन्धः प्रथमान्तार्थेनेव तृतीयान्तार्थेनापि समं वाक्यार्थः । निपातातिरिक्तनामार्थयोरेव भेदान्वयस्य विभक्त्यर्थगर्भत्वात्, साहित्यावच्छेदेन च सर्वत्र विधेयस्यान्वयः । एवञ्च पुत्रेण सहागतश्चैत्र इत्यत्र पुत्रवृत्तिसाहित्यावच्छिन्नश्चैत्र आगमनकर्त्ता इत्यन्वयबोधः ॥ ६८ ॥

वक्ष्यमाणदोषादाह—वस्तुतस्त्विति । अपेक्षाबुद्धीति । पितापुत्रावित्याद्याकारकबुद्धिविषयत्वरूपसाहित्यमित्यर्थः, रूपेण सह घटं पश्यतीत्याद्यनुरोधेन सङ्ख्यामुपेक्ष्य अपेक्षाबुद्धिविशेषविषयत्वपर्यन्तानुधावनम् ; लाघवादाह—सङ्ख्येे-

---

(१) अत्रावधेयत्वञ्च तत्तन्नियमस्यैतदंशातिरिक्तस्थले व्याप्तिः स्यादित्यभिप्रायिकमिति बोध्यम् ।

(२) अपेक्षाबुद्धिश्च—अयमेकः, अयमेकः, इमौ द्वौ, अयमेकः, अयमेकः, अयमेकः, इति इमे त्रय इत्येताद्दशीरूपा बोध्या ।

ति । ननु सङ्ख्यःमात्रस्य तृतीयाऽर्थत्वे तस्य प्रकृत्यर्थविशेषणतयैव भानात् तृतीया प्रकृत्यर्थस्य सहशब्दार्थे भाने आधेयतायाः संसर्गतया भानमुपेयं, स च कस्य प्रतिपाद्य इत्यत आह—**सहशब्दार्थस्य सम्बन्ध इति** । वाक्यार्थ इति—वाक्यप्रतिपाद्य इत्यर्थः । तथा च तादृशवाक्याकाङ्क्षाज्ञानकार्यताऽवच्छेदकतयैव तादृशसम्बन्धभानमिति भावः । ननु नामार्थयोर्भेदान्वये विभक्त्यर्थद्वारताया अपेक्षितत्वात् कथं तां विना नामार्थयोर्भेदान्वय इत्यत आह—**निपातातिरिक्तेति** । तथा च सहशब्दस्य निपाततया विभक्त्यर्थद्वारतां विनैव नामार्थयोर्भेदान्वयो न व्युत्पत्तिविरोधमासादयतीति भावः । विभक्त्यर्थगर्भत्वाद्—विभक्त्यर्थं द्वारीकृत्य व्युत्पन्नत्वादित्यर्थः । ननु पुत्रेण सहागतश्चैत्र इत्यादौ पुत्रचैत्रोभयस्मिन्नेवागमनकर्तृत्वप्रतीतेरानुभविकतया तदनुपपत्तिरित्यत आह—**साहित्यावच्छेदेनेति** । अवच्छेदकत्वमत्रानतिरिक्तवृत्तित्वम् । प्रकृतेऽन्वयबोधं दर्शयति—**एवञ्चेत्यादिना** । **पुत्रवृत्तीति** । आधेयतासम्बन्धेन पुत्रविशिष्टेत्यर्थः । इदमत्रालोचनीयं, पुत्रेण सहागतश्चैत्र इत्यादौ तादृशसाहित्येऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य स्वव्यापकतरूकत्वस्य वा न प्रकारतया तादृशबोधे भानसम्भवः, तस्य तादृशवाक्यघटकपदार्थत्वाभावात्, किन्तु स्वव्यापकताऽवच्छेदकागमनकृतित्वावच्छिन्नप्रतियोगिकसमवायेनैव विधेयभानं तत्रोपगन्तव्यम् । एवञ्च तदभ्युपगमे तादृशस्थले न क्षतिः, व्युत्पत्तिवैचित्र्यात् । पुत्रवृत्तिसाहित्यावच्छेदेनागमनकर्तृत्वबोधे पुत्रोऽप्युत्तरकालम् आगमनकर्तृत्वबोधो मानसात्मकः सम्भवतीति । न च पुत्रवृत्तिसाहित्यस्य तादृशबुद्धिविषयतारूपस्य विषयभेदेन भिन्नस्य चैत्रे बाधान्न तादृशप्रयोगः साधुरिति वाच्यं, विषयतासम्बन्धेन तादृशबुद्धेरेव साहित्यरूपत्वात् । न च तथाऽपि विषयतासम्बन्धेन तादृशसाहित्यस्य चैत्रत्वपुत्रत्वादावपि सत्त्वेन तत्रागमनकर्तृत्वादिरूपविधेयासत्त्वेन तादृशसाहित्यव्यापकत्वभानानुपपत्तिरिति वाच्यं, तत्तन्निष्ठविषयतासंबन्धस्यैव व्याप्यताघटकसम्बन्धत्वोपगमात् तथैव साकाङ्क्षत्वाच्चेति ॥ ६८ ॥

मतान्तरसाधकवाक्यम्—

तेन शिष्येण सह उपाध्यायो ब्राह्मणः-सुन्दर इत्यादौ द्रव्यगुणादिविधेयकस्थलेनान्वयः । "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी"त्यत्र पुत्रेषु भारवहनकर्तृत्वाबोधेऽपि तादृशप्रयोगादेकदेशे विद्यमानेत्यध्याहारेण एकदेशविद्यमानतायामुक्तसाहित्यस्यावच्छेदकतयाऽन्वयः, दशपु-

वृत्तिसाहित्यावच्छिन्नैकदेशविद्यमानत्ववती गर्दभी भारवहनानुकूलकृतिमतीत्यन्वयबोधः, (१) अत एव विद्यमानसहार्थे तृतीयेति शाब्दिका वदन्ति (२)॥ ६९ ॥

पूर्वकल्पपरित्यागे बीजं दर्शयति–तेनेति। वस्तुतस्तु कल्पानुसरणेनेति तदर्थः। शिष्येण सह उपाध्यायो ब्राह्मण इत्यादौ शिष्येण सह उपाध्यायः सुन्दर इत्यादौ चेत्यर्थः। द्रव्यगुणादीति। तत्र समभिव्याहृतक्रियाया अभावेन पूर्वकल्पे सहार्थान्वयासम्भवादिति भावः। अन्वय इति। अस्मद्दर्शनरीत्या शाब्दबोधे तात्पर्यं बोध्यम्। अत एव एकदेशे विद्यमानेत्यध्याहारेणैव तत्र शाब्दबोधादेवेत्यर्थः। विद्यमानसहार्थे। विद्यमानत्वान्वयिसहार्थ इत्यर्थः ॥ ६९ ॥

मतान्तरसाधकवाक्यम्—

धान्येन धनी, गोत्रेण गार्ग्यः, प्रकृत्याऽभिरूप इत्यादौ "प्रकृत्यादिभ्य उपसंख्यानम्" इत्यनेन तृतीयाऽभेदार्थिका, धान्याभिन्नधनवानित्यन्वयधीः, गार्ग्यो गर्गकुलोत्पन्नः, तथा च गोत्राभिन्नगर्गकुलोत्पन्न इत्यन्वयधीः। प्रकृतिपदस्य साहजिकोऽभिरूपपदस्य रमणीयतावान् अर्थः, तथा च साहजिकाभिन्नरमणीयतावानित्यन्वयः॥ ७० ॥

गोत्रेणेति—गोत्रम्=आदिपुरुषः, गर्गः=मुनिविशेषः। साहजिक इति। अर्थ इति परेणान्वयः, साहजिकत्वं—जन्यकृत्यजन्यत्वं, रमणीयता–सुखजनकदर्शनविषयरूपादिमत्ता। 'प्रकृत्या कृपण' इत्यादौ प्रकृतिपदं स्वाधिकरणयावत्कालवृत्तिधर्मपरं, तथा च स्वाधिकरण-यावत्कालवृत्ति-धर्माभिन्न-कार्पण्यवानित्यन्वयबोधः। 'जात्या ब्राह्मण' इत्यत्र ब्राह्मणपदं लक्षणयाऽदृष्टविशेषप्रयोज्यधर्मवत्परं तथा च जात्यभिन्नो योऽदृष्टविशेषप्रयोज्यधर्मस्तद्वानित्यर्थः, ब्राह्मणत्वजात्यवच्छि-

---

(१) एतच्चांशः प्राचीन पुस्तके नोपलभ्यते।

(२) अयं भावः–अत्र सहार्थः साहित्यमेकधर्ममात्रं, तृतीयाऽर्थो वृत्तित्वं संख्या मात्रं वा, तथा च शिष्यवृत्तिसाहित्यवान् उपाध्यायो ब्राह्मण इत्यादिप्रकारेण बोध्यः "एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी"॥

इत्यादौ च भारवहनकर्तृत्वाभावेऽपि सहप्रयोगे विद्यमानेत्यस्याध्याहारात् विद्यमानत्वं साहित्यं सहशब्दार्थः। तथा च समानकालिकत्वसम्बन्धेन दशपुत्रवृत्तिविद्यमानत्वविशिष्टविद्यमानत्वाश्रय इत्याकारकान्वयबोध इति बोध्यम्।

त्परत्वेऽन्वयितावच्छेदकानुपस्थित्या तत्र जात्यभेदान्वयानुपपत्तिः (१) इत्यधिक-मन्यत्रानुसन्धेयम् ॥ ७० ॥

## सम्प्रदानत्वविवेचनम् ।

सिद्धान्तवाक्यम्—

(२)कर्म्मणा यमभिप्रैति स सम्प्रदानम्" ( १।४।३२ पा० ) इति सूत्रं तत्क्रियाकारणीभूतेन तत्क्रियाकर्म्मणा यं सम्बन्धीकर्त्तुमभिप्रैति कर्त्ता स सम्प्रदानमिति सूत्रार्थः । एवञ्च तत्क्रियाकारणीभूतकर्म्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति पर्य्यवसितम् । ग्रामं गच्छतीत्यत्र गमनकर्म्मजन्यफलभागित्वेनोद्देश्यस्य चैत्रादौ सत्त्वात्, चैत्रादेस्तत्क्रियायां

(१) अयंभावः–जननेन प्राप्यते या सा जातिरिति व्युत्पत्तिकरणे युवत्वादावव्याप्तिमाशङ्क्य "आकृतिग्रहणे"ति निर्धार्य अनुगतसंस्थानव्यङ्ग्यत्वे सति असर्वलिङ्गत्वे सति सकृदाख्यातेन ज्ञानगोचरीभूता जातिरित्यवधारितम् । तथा च "जात्या ब्राह्मणः" इत्यादिप्रयोगे जातेः स्वरूपतः। सुग्राह्यत्वेन तत्र यदि तस्यास्तादात्म्येनान्वयः स्यात्तर्हि अन्वयिताऽवच्छेदकानुपस्थितत्या जन्मभेदान्वयानुपपत्तिरिति बोध्यम् ।

(२) अत्रेदं ज्ञेयम्–दानमात्यन्तिकं येन लभ्यते पूजितादिना।
सम्प्रदानं तदुक्तं तत् त्रिविधं परिकीर्त्तितम् ॥
प्रेरकञ्च निराकर्त्तृ तथाऽनुमन्तृ कोविदैः । द्विजाय गां ददौ साधुरित्यत्र प्रेरको द्विजः ॥
ददाति तरवे तोयं सोऽत्र न प्रेरकस्तरुः । निराकर्त्ता नानुमन्ता नानिराकर्त्तृतां गतः ॥
ददात्यतिथये साधुः फलमूलजलादिकम् । अत्र न प्रेरयत्येष न निराकुरुते तथा ॥
ददात्यर्थस्य यत्कार्यमात्रं गृह्णाति तत् क्वचित् । सम्प्रदानत्वमाप्नोति भयं तस्मै ददात्यसौ ॥

तत्त्वञ्च वैयाकरणनये—धात्वर्थक्रियाजन्यफलाश्रयसम्बन्धित्वेन कर्माभिप्रेतत्वम् । अखण्डोपाधिर्वा । संकेतविशेषसम्बन्धेन तत्पदवत्त्वं वा । धात्वर्थश्चान्योद्देश्येन त्यागानुकूलो व्यापारः, एवञ्च "विप्राय गां ददाती" त्यसौ विप्रोद्देश्यके गोनिष्ठत्यागानुकूलोव्यापारो देवदत्तकर्त्तृक इति बोधः । एवं वृक्षायोदकं सिञ्चति, शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेषयतीत्यादौ वृक्षोद्देश्यकोदकनिष्ठक्रियाऽनुकूला देवदत्तनिष्ठा क्रियेत्यादिप्रकारेण बोधः । यदि तु दाधातुयोग एवानेन सम्प्रदानमित्याग्रहः, तदा युद्धाय संनह्यत इतिवत् "तुमर्थाच्च भाववचनात्" इत्यनेन चतुर्थी बोध्या ।

नैयायिकनये तु–क्रियाकारणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वम्, "ग्रामं गच्छती"त्यादौ गमनक्रियाया ग्रामस्याकारणत्वान्न दोषः । दानादौ च देयादिकं कारणमिति न प्रकृतसङ्गते विरोधः । बोधप्रकारश्च उक्त एवेत्यास्तां तावत् ।

सम्प्रदानत्वभावात् तद्वारणाय कारणीभूतेति । तत्र गमने ग्रामस्य कारणत्वात्, दानादौ च गवादिदेयादिकमेव कारणमिति लक्षणसमन्वयः ७१

सम्प्रदानं लक्षयति—कर्म्मणेति । लक्षणातिव्याप्तिवारणाय कर्म्मपदं विशेषयति—तत्क्रियेति । सम्बन्धीकर्त्तुमभिप्रैति—फलभागित्वेनेच्छोद्देश्यीकरोति । सम्प्रदानमिति । तत्क्रियासम्प्रदानमित्यर्थः । इच्छानिवेशे कर्त्तृनिवेशे च प्रयोजनाभावान्निष्कृष्टार्थमाह—एवञ्चेति । तत्क्रियाकारणीभूतेत्यस्य फलमाह—ग्राममित्यादि । तद्वारणायेति । चैत्रो गमनक्रियासम्प्रदानमिति व्यवहारवारणायेत्यर्थः । काष्ठैः स्थाल्यामोदनं पचतीत्यादौ पाकक्रियाकारणजन्यविक्लित्त्यादिफलभागित्वेनौदनादेरुद्देश्यत्वात् तद्वारणाय कर्मेति बोध्यम् । तत्र गमने—गच्छतीत्यादिबोध्ये गमन इत्यर्थः । कारणत्वादिति । गमनैकदेशे संयोगे ग्रामस्य कारणत्वेऽपि गमने कारणत्वाभावादिति भावः । दानादाविति । आदिपदात् सेकादिपरिग्रहः । देयादिकमिति । आदिना उदकादिपरिग्रहः । दानैकदेशे स्वत्वे पूर्वस्वत्वध्वंसद्वारा गवादेर्हेतुत्वात् स्वत्वध्वंसेऽपि स्वत्वद्वारा हेतुत्वाच्च गवादेर्दानकारणत्वमिति भावः । स्वत्वज्ञानद्वारा देयस्य गवादेरिच्छां प्रत्येव प्रयोजकत्वमिति केचित् ॥ ७१ ॥

सिद्धान्तसाधकवाक्यम्—

विप्राय गां ददातीत्यादौ जन्यफलप्रकारकेच्छापूर्वकत्वं चतुर्थ्यर्थः । व्युत्पत्तिवैचित्र्याच्च जन्यत्वेऽप्रकृत्यर्थस्यापि कर्म्मणो गवादेर्निरूपकतासम्बन्धेनान्वयः, स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो ददातेरर्थः, कृतिश्चाख्यातार्थः, एवञ्च विप्रविषयकगोजन्य—फलप्रकारकेच्छापूर्वकगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयधीः ॥ ७२ ॥

इच्छापूर्वकत्वम्—इच्छाप्रयोज्यत्वम्, इदञ्च धात्वर्थताऽवच्छेदकपरस्वत्वान्वयि । विषयतया—उद्देश्यतया, प्रकृत्यर्थः,—विप्रादिः । अथैवं चैत्रश्चैत्राय ग्रामं गच्छतीत्यादेरपि प्रयोगापत्तिः, तत्र चैत्रोद्देश्यकग्रामजन्यफलप्रकारकेच्छाप्रयोज्यग्रामनिष्ठसंयोगावच्छिन्नक्रियावान् चैत्र इत्यन्वये बाधकाभावादिति चेन्न, चतुर्थ्यर्थघटकजन्यत्वं न जन्यतामात्रं, किन्तु करणतानिरूपितजन्यत्वमिति धात्वर्थघटकसंयोगे ग्रामनिष्ठकरणतानिरूपितजन्यत्वस्य बाधेन तादृशान्वयाभावात् ॥ ७२ ॥

साधकवाक्यम्—

पितृस्वर्गमुद्दिश्य कृते च गोदाने दानजन्यफलभागित्वेन पितोद्देश्यो-न तु गोजन्यफलभागित्वेनेति पित्रादेर्न सम्प्रदानत्वं यदि च दत्ता गौःपितुः स्वर्गमुत्पादयिष्यतीत्यभिसन्धिस्तदाऽदृष्टद्वारक-तादृशकर्म्मजन्यत्वं वाच्यम् ।

केचित्तु-धात्वर्थताऽवच्छेदकत्वेन फलं विशेष्यं, निरूपितत्वेनेच्छा-विषयत्वं चतुर्थ्यर्थः, स च धात्वर्थताऽवच्छेदके फलेऽन्वेति, इत्थञ्च विप्र-निरूपितत्वेनेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्न-त्यागानुकूलकृतिमानित्यन्वयधीः (१)जन्यस्वत्वस्य गोवृत्तित्वे लब्धे अर्था-त्तज्जन्यत्वमपि लभ्यत एवेति तादृशगोजन्यस्वस्वत्वनिरूपकत्वेनोद्देश्यत्वं विप्रस्याक्तम् ॥ ७३ ॥

पितृस्वर्गमुद्दिश्य कृते गोदाने पितुः सम्प्रदानत्वापत्तिरत आह—**पितुः स्व-र्गमिति । अभिसन्धिः**—इच्छा । **अदृष्टद्वारकेति**—प्रकृते तु स्वजन्यदानज-न्यादृष्टद्वारकमेव दानकर्म्मगवादिजन्यत्वं स्वर्गे, इति पित्रादेः सम्प्रदानत्वव्युदासः, एवं चतुर्थ्यर्थजन्यत्वमप्यदृष्टाद्वारकं ग्राह्यं, तेन तत्र पित्रे गां ददातीत्यादिप्रयोगस्य नापत्तिः । फलं —लक्षणघटकफलं, तथा च धात्वर्थकारणीभूतकर्म्मजन्यतद्धात्वर्थ-ताऽवच्छेदकफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति भावः। अत्र धात्वर्थताऽवच्छेद-कत्वम् अवच्छेदकताऽवच्छेदकसाधारणं, तेन वृक्षायोदकमासिञ्चतीत्यादौ धात्वर्थता-ऽवच्छेदकताऽवच्छेदकसंयोगवत्त्वेनोद्देश्यत्वेऽपि न वृक्षादेः सम्प्रदानत्वहानिः, प्रकृते च स्वर्गो न धात्वर्थताऽवच्छेदक इति नातिप्रसङ्गः पित्रादाविति भावः । इत्थञ्चेति विप्रनिरूपितत्वेनेच्छाविषयो यद्गोवृत्तिस्वत्वध्वंसपूर्वकपरस्वत्वं तदवच्छिन्नत्यागानु-

(१) एवञ्च "दत्ता गौः पितुः स्वर्गमुत्पादयिष्यति" इत्यादौ तु पितुः स्वर्गा-दिकं न तथेत्यदोषः । चैत्राय चैत्रो ग्रामं गच्छतीत्यादिप्रयोगवारणाय परेति । स च धात्वर्थताऽवच्छेदकफलेऽन्वेति । बोधप्रकारस्तु मूले उक्त एव ।

यत्तु, अत्र जन्यफलप्रकारकेच्छापूर्वकत्वं क्रियान्वयि चतुर्थ्यर्थः । व्युत्पत्तिवैचि-त्र्याच्च तदेकदेशे जन्यत्वे कर्मणो गवादेर्निरूपकत्वसम्बन्धेनान्वयः । तथा च वि-प्रविषयकगोनिरूपितजन्यफलप्रकारकेच्छापूर्वकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूल-त्यागानुकूलकृतिमानित्यन्वयधीरिति, तन्न, गोजन्यफलस्य प्रकृते स्वत्वरूपतया विप्रविषयिका या गोजन्यफलप्रकारिकेच्छा तत्पूर्वकत्वस्य दानेऽसम्भवात् तादृशे-च्छाया एव दानत्वाद् , गौरवाच्चेति दिक् ।

कूलकृतिमानित्यन्वयबोधः । नन्वेवं विप्राय गां ददातीत्यादिप्रयोगस्य विप्रसम्प्रदानत्वबोधकत्वमनुभवसिद्धं, तच्चैतन्मते नोपपद्यते शाब्दबोधे स्वत्वे गोवृत्तित्वस्यैव भानादित्यत आह—जन्यस्वत्वस्येति । अर्थादिति—तथा च तत्समवेतजन्यस्वत्वस्य तज्जन्यत्वनियमात् तादृशशाब्दानन्तरं मानस एव सम्प्रदानत्वबोध इति भावः ॥ ७३ ॥

साधकवाक्यम्—

एवञ्च वृक्षायोदकमासिञ्चतीत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियाऽवच्छिन्नव्यापारो धात्वर्थः । वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः, स च धात्वर्थताऽवच्छेदकताऽवच्छेदकसंयोगान्वयी, वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यक्रियायामन्वेति । एवञ्च वृक्षवृत्तित्वेनेच्छाविषय-संयोगावच्छिन्न—जलवृ —द्रवद्रव्यक्रियाऽवच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयबोधः ॥ ७४ ॥

एवञ्चेति । तादृशलक्षणकरणे चेत्यर्थः । वृक्षायेति । अत्रापि सम्प्रदानत्वं मुख्यमेवेति भावः । एवञ्चेति । वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदनुकूला या उदकवृत्तिर्द्रवद्रव्यवृत्तिक्रिया तदनु लव्यापारानुकूलकृतिमानित्यन्वयधीरित्यर्थः ॥ ७४ ॥

आक्षेपनिराकरणपूर्वकसाधकवाक्यम्—

न चैवं सिचधात्वर्थताऽवच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षमासिञ्चतीति प्रयोगो न स्यात्, तादृशक्रियाया वृक्षवृत्तित्वाभावादिति वाच्यं, तत्र संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोग एव वृक्षवृत्तित्वान्वयात् । द्रवद्रव्यसंयोग एव तत्र धात्वर्थ इति तु न युक्तं, तथा सति फलावच्छिन्नव्यापाराबोधकत्वेन धातोरकर्मकत्वे धात्वर्थताऽवच्छेदकफलशालित्वाभावेन वृक्षादेरकर्मत्वापत्तेः ॥ ७५ ॥

तादृशक्रियाया इति । संयोगावच्छिन्नद्रवद्रव्यक्रियाया इत्यर्थः । तत्र—पयसा वृक्षमासिञ्चतीत्यादौ । तदवच्छेदकीभूतेति । धात्वर्थताऽवच्छेदकीभूतेत्यर्थः । प्राचीनमतं दूषयति—तत्रेति । पयसा वृक्षमासिञ्चतीत्यादावित्यर्थः ॥ ७५ ॥

दृष्टान्तपूर्वकसाधकवाक्यम्—

अत एव-अजां ग्रामं नयतीतिवद् न द्विकर्मकत्वं, संयोगावच्छिन्नद्रव-

द्रव्यक्रियाऽर्थकत्वे तदवच्छेदकफलद्वयाभावात् । तादृशक्रियावच्छिन्नव्यापारस्य धात्वर्थत्वे च तादृशक्रियायामेव द्वितीयार्थवृत्तित्वान्वयात् तत्क्रियाऽवच्छेदकसंयोगे च चतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयात् । फलबलेन तथैव व्युत्पत्तिकल्पनात् ॥ ७६ ॥

अत एव—वक्ष्यमाणयुक्तेरेव । ननु तादृशक्रियाऽवच्छिन्नव्यापारार्थकत्वे द्विकर्मकत्वं दुर्वारम्, अत आह—तादृशक्रियेति ॥ ७६ ॥

आक्षेपनिराकरणपूर्वकसाधकवाक्यम्—

न चैवमजां नयति ग्राममित्यत्रापि ग्रामस्य सम्प्रदानत्वापत्तिः । तथाहि संयोगजनकगमनानुकूलव्यापारः, धात्वर्थः, द्वितीयाद्वयस्य वृत्तित्वमर्थः, प्रेरणादिधात्वर्थताऽवच्छेदकगमनैकदेशे संयोगे ग्रामपदोत्तरद्वितीयार्थस्य-गमने चाजापदोत्तरद्वितीयाऽर्थस्य वृत्तित्वस्यान्वयः । एवञ्च ग्रामवृत्तिसंयोगजनकाजावृत्तिगमनावच्छिन्नव्यापारानुकूल-कृतिमानित्यन्वयधीः । तथा चाजाजन्यफलभागित्वेनोद्देश्यत्वेन ग्रामस्याप्रत्ययात् न सम्प्रदानता ।

यत्र तु तथोद्देश्यत्वं विवक्षते, तदा ग्रामायाजां नयतीति प्रयोगो भवत्येवेत्याहुः ॥ ७७ ॥

एवमिति । तत्तत्क्रियाकारणीभूत-कर्मजन्य-फलभागित्वेनोद्देश्यत्वस्यैव सम्प्रदानत्व इत्यर्थः । सम्प्रदानत्वापत्तिरिति । ग्रामस्याजाजन्यसंयोगरूपफलभागित्वेनोद्देश्यत्वादिति भावः । न चाजां नयतीत्यादौ संयोगानुकूलक्रियाऽवच्छिन्नव्यापारस्य धात्वर्थतयाऽजायास्तादृशक्रियाकारणत्वाभावात् कथं ग्रामस्य सम्प्रदानत्वापत्तिरिति वाच्यं, तादृशधात्वर्थताऽवच्छेदकताऽवच्छेदकसंयोग एव क्रियाद्वारा अजायाः करणत्वेन कारणत्वस्याक्षतत्वात्, एवं रीत्या पूर्वं सिचधातोः कर्मणः करणत्वं बोध्यमिति । तथाहि—उक्तापत्त्यभावं जानीहि । न सम्प्रदानतेति । तथा च तत्र तादृशोद्देश्यत्वबोधो न तात्पर्यविषय इति भावः । यत्र तादृशबोधस्तात्पर्यविषयस्तत्र तादृशप्रयोग इष्ट एवेत्याह—यत्र त्विति । विवक्षयते—वक्तुस्तात्पर्यविषयो भवतीत्यर्थः ॥ ७७ ॥

सिद्धान्तसिद्धमतवाक्यम्—

वस्तुतस्तु त्यक्तुस्त्यज्यमानद्रव्यस्य स्वत्वभागित्वेनोद्देश्यत्वं सम्प्रदानत्वं त्यागविशेषश्चात्र ग्राह्यः । तेन विक्रयादौ क्रेत्रादेर्न सम्प्रदानता । श्राद्धा-

दौ पित्रादेर्न स्वत्वभागित्वेनोद्देश्यत्वं(१), किन्तु प्रीतिभागितयेति । अत-एव सम्प्रदानचतुर्थ्यसम्भवात् "नमःस्वस्ती"त्यादि सूत्रान्तरेण चतुर्थी-विधानम् । रुद्राय गां ददातीत्यादौ रुद्रादेः स्वत्वभागित्वेनोद्देश्यत्वम् ॥७८॥

पूर्वमते केचित्त्वित्यादिमते च क्रयविक्रयादौ क्रेत्रादेः सम्प्रदानत्वापत्तेराह—वस्तुतस्त्विति । उक्तप्रयोगासहिष्णुराह—वस्तुतस्त्वितीति केचित् । त्यज्य-मानेति—देयेत्यर्थः । त्यागविशेषः—अनुभवसिद्धदानत्वजात्यवच्छिन्नरूप इ-त्यर्थः । स्वत्वभागित्वेनोद्देश्यत्वं—देयद्रव्य-स्वत्वभागित्वेनोद्देश्यत्वमित्यर्थः । प्रीतिभागितया—प्रीतिभागितयैवेत्यर्थः । ननु देवतायाः स्वत्वास्वीकारे रुद्राय गां ददातीत्यादौ रुद्रादेः सम्प्रदानत्वानुपपत्तिरत आह—रुद्रायेति । उद्देश्यत्व-मिति । तथा च देवतायाः स्वत्वस्वीकारे इच्छा न विसंवादिनी, तदस्वीकारे विसंवादिनीत्युभयथैव तादृशोद्देश्यत्वानपायादिति भावः ॥ ७८ ॥

साधकवाक्यम्—

कर्मणेत्यादिसूत्रमप्येतत्परतयैव व्याख्येयमिति । कर्मणा—दानकर्म-णा, यमभिप्रैति—स्वत्वभागित्वेनोद्देश्यीकरोति, स सम्प्रदानमिति । एवञ्च सम्प्रदीयतेऽस्मै इति व्युत्पत्त्या सम्प्रदानसंज्ञाऽप्यन्वर्थैव । वृक्षायोद-कमासिञ्चतीत्यादौ वृक्षादौ सम्प्रदानप्रयोगो गौणश्चतुर्थीप्राप्त्यर्थः ॥ ७९ ॥

एतत्कल्पे पूर्वोक्तकल्पे च सूत्राविरोधमुपपादयति—कर्मणेत्यादि । इदञ्च यागादेरपि दानत्वमभ्युपेत्य, अन्यथा यजादिधातुयोगे रुद्रादेः सम्प्रदानत्वानुपपत्तेः, तस्य दानत्वाभावात्, तदनभ्युपगमे तु दानादिकर्मणेति व्याख्येयम् । एवञ्चेति—दानघटितलक्षणकरणे वृक्षादेः सेकसम्प्रदानत्वासम्भवेन चतुर्थी न स्यादत आह—वृक्षायेति । गौणः—क्रियाकर्मजन्यफलभागित्वेनोद्देश्यत्वेन लाक्षणिकः । चतु-र्थीप्राप्त्यर्थ इति । चतुर्थ्यास्तत्र लक्षणेति भावः । लाक्षणिकचतुर्थीघटितस्थले फले अवच्छेदकसाधारणधात्वर्थताऽवच्छेदकत्वस्य न निवेश इत्यभिप्रायः ॥ ७९ ॥

दृष्टान्तपूर्वकसाधकवाक्यम्—

अत एव शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेरयतीत्यादौ धात्वर्थताऽव-च्छेदकफलोद्देश्यत्वाभावेऽपि चतुर्थीप्रयोग उपपद्यते । विभागानुकूल-व्यापारो मोचनं, गमनानुकूलव्यापारः प्रेरणं, तदवच्छेदकगमनादिवि-

(१) "इदं पित्रे नमः" "पितृभ्यः स्वधा" इत्याद्युदाहरणे ।

भागशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वात् । तथा च तत्र तत्र उदकादिजन्यफलपल्लवाद्यस्त्रजन्यदुःखादिदूतजन्यवार्त्ताज्ञानादिफलशालित्वेनोद्देश्यत्वमेव गौणचतुर्थ्यर्थः ।

न चैवं गुरुप्रीतिमुद्दिश्य गुरुपुत्राय दत्ते गुरवे गां ददातीति प्रयोगः स्यात्, तथा विवक्षायामिष्टत्वात् । अत एव यत्र रजकसम्बन्धित्वमात्रं तात्पर्यविषयस्तत्र रजकस्य वस्त्रं ददातीति प्रयोगः स्यात्, यत्र तु वस्त्रजन्यफलभागित्वेनोद्देश्यत्वं तात्पर्यविषयस्तत्र रजकाय वस्त्रं ददातीति प्रयोगो भवत्येव ॥ ८० ॥

अत एव—धात्वर्थताऽवच्छेदकत्वस्य फलेऽनिवेशादेव । चतुर्थीप्रयोगः—क्रियाकर्मजन्यफलभागित्वेनोद्देश्यत्वे लाक्षणिकचतुर्थीप्रयोग इत्यर्थः । तत्र फले धात्वर्थताऽवच्छेदकत्वनिवेशे तन्नोपपद्यत इति भावः । तत्र तत्र लाक्षणिकचतुर्थीप्रयोगमुपपादयति—विभागेत्यादिना । तत्र तत्र—निरुक्तस्थलत्रये । क्रमेण दर्शयति—उदकादीति । एवं—धात्वर्थताऽवच्छेदकत्वस्य फलेऽनिवेशे । तथाविवक्षायां—गुरुप्रीत्युद्देश्यकत्वविवक्षायाम् । अत एव—क्रियाकर्मजन्यफलभागित्वेनोद्देश्यत्वस्य तात्पर्यविषयत्वे लाक्षणिकचतुर्थीप्रयोगस्येष्टत्वादेव । वस्त्रजन्यफलेति—फलमत्र स्वत्वादिकम् ॥ ८० ॥

आक्षेपनिराकरणपूर्वकसाधकवाक्यम्—

न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागितया उद्देश्यत्वाद् गौणसम्प्रदानत्वेन सम्प्रदानचतुर्थ्यैवोपपत्तेर्नमः स्वस्तीत्यादिसूत्रान्तरं व्यर्थमिति वाच्यं, यत्किञ्चित्क्रियाकर्मजन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसम्प्रदानत्वेन नमः पदादेः क्रियावाचकत्वाभावेन पृथक् सूत्रप्रणयनात् ।

नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु नारदादेर्न सम्प्रदानता, किन्तु "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ पा० ) "धारेरुत्तमर्णः" ( १।४।३५ पा० ) इति सूत्रद्वयेन सम्बन्धमात्रे चतुर्थी विधीयते, यत्र चतुर्थ्या सम्बन्धो धातुना रुचिराख्यातेन विषयताऽभिधीयते । नारदस्य रुचिविषयः कलह इत्याद्यस्य, पुनर्दानमङ्गीकृत्य । द्रव्यग्रहणं धारणं, वैश्यस्य शतकर्मकतादृशग्रहणाश्रय इत्यन्तस्यान्वयधीः ॥ ८१ ॥

कर्मजन्येति—क्रियाकर्मजन्येत्यर्थः । नन्वेवं 'नारदाय रोचते कलह' इत्यादै

नारदादेर्निरुक्तसम्प्रदानत्वाभावात् नमःस्वस्तीत्यादिसूत्राविषयत्वाच्च चतुर्थी न स्यादित्यत आह—नारदायेति । रुचिः—प्रीतिः, सा चेच्छा, तथा च नारद-समवेतरुचिविषयः कलह इत्यर्थः । वैश्यस्येति—वैश्यसम्बन्धिशतसङ्ख्यक-द्रव्यस्य पुनर्दानस्वीकारोत्तरग्रहणाश्रय इत्यर्थः ॥ ८१ ॥

सिद्धान्तविशिष्टवाक्यम्—

(१)सम्प्रदानस्य कारकत्वं धात्वर्थताऽवच्छेदकफलनिष्पादकत्वेन दद-स्वेत्यनुमतिप्रकाशेन कर्त्तुरिच्छामुत्पाद्य दाननिष्पादनेन वेति ।

अपरे तु त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं सम्प्रदानत्वम् । श्राद्धादौ पित्रादेर्न स्वीकारः, रुद्राय गां ददातीत्यादावपि सम्प्रदानत्वं गौण-मुद्देश्यत्वस्वरूपमित्याहुः ॥ ८२ ॥

सम्प्रदाने क्रियानिमित्तस्वरूपकारकत्वं सङ्गमयति—सम्प्रदानस्येति । मतान्तरमाह—त्यागजन्येति । त्यागश्चात्र विशिष्य ग्राह्यस्तेन क्षेत्रादौ नाति-व्याप्तिः । न स्वीकार इति अतो न पित्रादेः सम्प्रदानतेति शेषः, चतुर्थी तु नमःस्वस्तीत्यादिसूत्रादेवेत्यर्थः । ननु रुद्रायेत्यादौ रुद्रस्य तादृशस्वीकाराभावेन सम्प्रदानत्वाभावाच्चतुर्थी न स्यादित्यत आह—रुद्रायेति । मनसा पात्रोद्देशेन दानस्थले तादृशपात्रस्यापि सम्प्रदानतायाः सर्वसिद्धतया तस्य स्वीकारासम्भवेन तदनुपपत्तिरित्यस्वरस आहुरित्यनेन सूचितः ।

"पुष्पमिदं विष्णवे नमः" इत्यादौ प्रीतिप्रकारकेच्छाधीनत्वं चतुर्थ्यर्थः, तस्य च मन्त्रकरणकत्यागविषयरूप-नमःपदार्थैकदेशे तादृशत्यागे तादृशत्यागरूपनमः पदार्थे वाऽन्वयः । तादृशेच्छायामुद्देश्यत्वसम्बन्धेन विष्णोरन्वयः, नमःपदार्थतादृ-शत्यागविषयस्याभेदसम्बन्धेन पुष्पादौ तादृशत्यागस्य वा विषयतासम्बन्धेन पु-ष्पादावन्वयः, निपातातिरिक्तनामार्थस्य भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्; एव-मग्रेऽपि । तथा च विष्णूद्देश्यकप्रीतिप्रकारकेच्छाधीनमन्त्रकरणकत्यागविषयाभिन्नं तादृशत्यागविषयो वा इदं पुष्पमित्यन्वयबोधः । ब्राह्मणोद्देश्यकगवादित्यागस्य मन्त्रकरणकत्वे प्रमाणाभावात् तत्प्रीत्युद्देश्यको ब्राह्मणाय नम इत्यादिको न प्रयोगः,

(१) पूर्वोक्तकारकत्वविवेचने सम्प्रदानविषये "सम्प्रदानादेरि" त्यादिना यदुक्तं तदेवात्र द्रढयति "सम्प्रदानस्येत्यादिना"विस्तृतञ्च पूर्वमेवास्माभिरिति तत्रत्य-एव द्रष्टव्यः ।

ब्राह्मणेभ्यो नम इत्यादौ नमःपदार्थं-नतिविषयत्वं चतुर्थ्यर्थः, ब्राह्मणविषयिका नतिरित्यन्वयबोधः । पुष्पमिदं परमात्मने नम इत्यादौ परमात्मनः प्रीत्यसम्भवेऽपि तत्प्रीतिप्रकारकविसंवादीच्छासम्भवान्न तत्प्रीत्युद्देश्यकत्वाप्रसिद्धिरिति स्वस्वकरणकहविस्त्यागविषयत्वं स्वधास्वाहयोरर्थः, तेनेदं पित्रे स्वधा, अग्नये स्वाहा इत्यादौ पित्रुद्देश्यकस्वधाकरणकस्य हविस्त्यागस्य विषयाभिन्नमिदमित्याकारकस्तत्र बोधः, पैतृके त्यागे स्वाहाऽऽदेः, दैविके च स्वधाऽऽदेर्न करणत्वं तद्ग्राहकमानाभावादतः पित्रे स्वाहा अग्नये स्वधा इत्यादिको न प्रयोगः । अधिकमन्यत्रानुसन्धेयम् ॥८२॥

## अपादानत्वविवेचनम् ।

सिद्धान्तवाक्यम्—

**(१)परकीयक्रियाजन्यविभागाश्रयत्वम् अपादानत्वम् । वृक्षात् पर्णं पततीत्यादौ पतनाश्रयस्य पर्णादेरपादानत्ववारणाय परकीयेति । अत्र तु पञ्चम्या विभागजनकत्वम्, अन्योन्याभावप्रतियोगिताऽवच्छेदकत्वञ्चाभिधीयते, विभागेऽन्योन्याभावे च वृक्षोऽधिकरणत्वेनान्वीयते । एवञ्च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगिताऽवच्छेदकपतनाश्रयः-पर्णमित्यन्वयधीः । अत्र च धात्वर्थताऽनवच्छेदकत्वेन विभागो विशेष्यः, तेन वृक्षं त्यजति खग इत्यादौ वृक्षादेर्नापादानत्वम् ॥ ८३ ॥**

---

( १ ) वैयाकरणनये-अत्रेदं बोध्यम्—

> विश्लिष्यतेः पदार्थस्य प्रथमो यः समाश्रयः ।
> तदपादानमायातो वैकुण्ठाद् गोकुलं हरिः ॥
> अपादानमिदं द्वेधमचलं चलमित्यपि ।
> पर्वतादवतीर्णोऽसौ धावतोऽश्वात् पपात सः ॥

तत्त्वञ्च, प्रकृतधातूपात्तविभागजनकव्यापारानाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयत्वमपादानत्वम् । नैयायिकनये तु—स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाऽजन्य विभागाश्रयत्वम् । तच्च त्रिविधं-निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियञ्चेति । साक्षाद्धातुना गतिनिर्देशे आद्यम् । यथाऽश्वात्पततीति । यत्र धात्वन्तरार्थागतिविशिष्टं स्वार्थं धातुराह तदुपात्तविषयम् । यथा बलाहकाद्विद्योतते विद्युत् । निःसरणपूर्वके विद्योतने द्युतिर्वर्त्तते । अपेक्षितक्रियं तु तद् यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवानिति ? पाटलिपुत्रादिति चोत्तरयति ।

अपादानलक्षणं लक्षयति—परकीयेति । स्वभिन्नसमवेतेत्यर्थः, स्वं लक्ष्यत्वेनाभिमतम् । पतनाश्रयस्येत्यनेन विभागजनकीभूतपतनक्रियायाः पर्णभिन्नासमवेतत्वं सूचितं, तेन च तादृशविशेषणेन पर्णस्यापादानत्ववारणमिति ज्ञापितम् । ननु परत्वे प्रकृत्यर्थताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयो वाच्यः, अन्यथोभयभेदमादाय पर्णात् पर्णं पततीत्यादिप्रयोगापत्तेः, तथा च पृथिव्याः पर्णं पततीत्यादिप्रयोगानुपपत्तिरित्यतः (१)परसमवेतत्वस्थले भेदप्रतियोगिताऽवच्छेदकत्वमाह—अन्योऽन्ययेति । न च तथाऽपि पर्णात् पर्णं पततीत्यादिप्रयोगापत्तिवारणं दुःशकं पर्णनिष्ठपतनक्रियायां पतनशून्यपर्णनिष्ठभेदप्रतियोगिताऽवच्छेदकत्वसत्त्वादिति वाच्यं, यन्निष्ठविभागजनकत्वं पतनक्रियायां बोध्यते, तन्निष्ठभेदप्रतियोगिताऽवच्छेदकत्वबोधस्यैव तादृशसमभिव्याहारस्थले स्वीकारादिति बोध्यम् । अधिकरणत्वेनेति । वृत्तित्वेनेत्यर्थः । अत्र—अपादानलक्षणे । धात्वर्थेति । तथा च परसमवेतधात्वर्थजन्यतद्धात्वर्थताऽनवच्छेदकविभागाश्रयत्वं तद्धात्वर्थापादानत्वमित्यर्थः ॥ ८३ ॥

मतान्तरनिराकरणवाक्यम्—

यत्तु विभागावच्छिन्नक्रियायास्त्यजधात्वर्थतया विभागे विशिष्टक्रियाजन्यत्वाभावान्न (२)तत्र तथेति तदसत्, तथा सत्यधःसंयोगावच्छिन्नक्रियाया एव पतधात्वर्थतया वृक्षपर्णविभागे पर्णाधःसंयोगस्याजनकत्वादसम्भवापत्तेः । तदुपलक्षितजन्यत्वञ्च उभयत्र समानमिति ॥ ८४ ॥

तादृशविशेषणासहिष्णुमतमाह—यत्त्विति । जन्यत्वाभावादिति । तथा च तद्धात्वर्थताऽवच्छेदकावच्छिन्नजनकतानिरूपितजन्यतावद्विभागाश्रयत्वमपादानलक्षणघटकमिति भावः । तत्र—वृक्षं त्यजतीत्यादौ वृक्षे, तथा—अपादानत्वम् ।

---

(१) पृथिव्याः पर्णं पततीत्यादौ पर्णेऽपि पृथिवीत्वस्य सत्वात्तदवच्छिन्नप्रतियोगिताकस्याभावेन प्रयोगानुपपत्तिः स्पष्टैव । अतः परसमवेतधात्वर्थजन्यतद्धात्वर्थताऽनवच्छेदकविभागाश्रयत्वं तद्धात्वर्थापादानत्वमिति श्रीमन्माधवेनोक्तं सुष्ठूपपद्यते ।

(२) अयं भावः, "वृक्षं त्यजति खग" इत्यादौ पूर्वोक्तलक्षणस्य वृक्षखगविभागे प्रसक्ततया तादृशविभागाश्रयतया चापादानत्वापत्तिः स्यादित्याशङ्कायामाह—जन्यत्वाभावादिति । "एवञ्च धात्वर्थताऽवच्छेदकावच्छिन्नजनकतानिरूपितजन्यतावद्विभागाश्रयत्वमिति पर्यवसितम् । उपर्युक्तलक्ष्ये तु यद्धात्वर्थताऽवच्छेदकविभागावच्छिन्नक्रियात्वं तद्विभागे जनकतानिरूपितजन्यताया असत्त्वेन दोषस्य दूरपराहतत्वात् ।

तथा सतीति । तद्धात्वर्थताऽवच्छेदकावच्छिन्नजनकतानिरूपितजन्यत्वस्य विवक्षणे सतीत्यर्थः । तादृशफलोपलक्षितक्रियाजन्यत्वस्य विवक्षितत्वे तद्दोषतादवस्थ्यमाह—तदुपलक्षितेति । फलोपलक्षितेत्यर्थः ॥ ८४ ॥

सिद्धान्तसाधकवाक्यम्—

**एवञ्च ग्रामाद् गच्छतीत्यादौ गमनादिजन्यविभागाश्रयत्वेन ग्रामादेरपादानत्वम् । "ध्रुवमपायेऽपादानम्" ( १।४।२४ पा० ) इति पाणिनिसूत्रम्, अपाये—विभागे, ध्रुवं निश्चलं, तद्विभागजनकक्रियाशून्यमिति तदर्थः । धावतोऽश्वात् पततीत्यादौ तु पञ्चमी नैतत्सूत्रेणानुशिष्टा, तदर्थं वक्तव्यान्तरं विधेयम् ॥ ८५ ॥**

**एवञ्चेति** । विभागे धात्वर्थताऽनवच्छेदकत्वविशेषणे एव चेत्यर्थः । **ग्रामादेरपादानत्वमिति** । अन्यथा विभागे संयोगविशिष्टक्रियाजन्यत्वाभावाद् ग्रामादेरपादानत्वं न स्यादिति भावः । सूत्रं व्याख्याय स्वमताविरोधमुपपादयति—**अपाय इति** । क्रियाशून्यमित्यर्थः, इति फलतो न विशेषः । नन्वेवं धावतोऽश्वादश्ववारः पततीत्यादौ अश्वादेरपादानत्वं न स्यात्, तत्र विभागजनकधावनक्रियावत्त्वादित्यतस्तत्रेष्टापत्तिमाह—**धावत इति** । **अनुशिष्टा**—अभिहिता । नन्वपादानत्वविरहे कथं पञ्चमीत्यत आह—**तदर्थमिति** । तत्र पञ्चमीप्राप्त्यर्थः, **विधेयं**—सूत्रान्तरं कल्पनीयमित्यर्थः, मुनेः सूत्राभावादिति भावः ॥ ८५ ॥

सिद्धान्तसाधकवाक्यम्—

**वस्तुतस्तु विभागजनकत्वं यत्क्रियायामन्वीयते तत्क्रियाशून्यत्वमर्थः । तेन धावतोऽश्वात् पततीत्यादौ न काऽप्यनुपपत्तिः । तत्र पतनक्रियाया मेव पञ्चम्यर्थविभागजनकत्वान्वयेनाश्ववृत्तिधावनक्रियायां तदनन्वयादिति ॥ ८६ ॥**

कल्पनासहिष्णुराह—**वस्तुतस्त्विति** । **तत्क्रियाशून्यत्वमिति** ।—क्रिया—धात्वर्थः, स्वनिष्ठविभागजनकीभूतयत्किञ्चित्क्रियाशून्यत्वं, स्वनिष्ठविभागजनकीभूतक्रियावत्त्वमिति यावत्, तादृशक्रियावत्त्वञ्च स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन बोध्यम् । **तदनन्वयात्**—पञ्चम्यर्थविभागजनकत्वानन्वयादित्यर्थः, तादृशसम्बन्धेन धावनक्रियावत्त्वाभावेऽपि पतनक्रियावत्त्वाभावेऽपि पतनक्रियावत्त्वादिति भावः ।

ननु धावतोऽश्वाच्चैत्रः पततीत्यादौ चैत्रस्यापि स्वनिष्ठविभागजनकीभूतधावनक्रियाशून्यत्वात् तस्याप्यपादानत्वापत्तिः, न च स्वनिष्ठविभागजनकत्वान्वितक्रियाशून्यत्वमित्येव विवक्षणीयं, तथा च चैत्रनिष्ठो यो विभागस्तज्जनकत्वस्य पतनक्रियायामेवान्वयात्तच्छून्यत्वाभावान्न चैत्रस्यापादानत्वमिति वाच्यं, धावतोऽश्वात् पतिताच्चैत्रादुष्णीषः पततीत्यादौ चैत्रस्यापादानत्वानुपपत्तेः, चैत्रनिष्ठो यो वस्तुगत्या विभागस्तज्जनकत्वान्विताश्वावधिकपतनक्रियावत्त्वात्, न च स्वनिष्ठत्वेन विभागजनकत्वान्वितक्रियाशून्यत्वं विवक्षणीयं, तथा च वस्तुगत्या यश्चैत्रनिष्ठो विभागस्तज्जनकत्वान्वयस्य चैत्रनिष्ठपतनक्रियायां सत्त्वेऽपि चैत्रनिष्ठत्वेन विभागजनकत्वान्वयस्य चैत्रनिष्ठपतनक्रियायामभावात्, किन्तूष्णीषपतनक्रियायामेव तच्छून्यत्वं चैत्रेऽक्षतमिति न तत्र चैत्रस्यापादानत्वहानिरिति वाच्यं, तथा सति तादृशक्रियाशून्यत्वमादाय धावतोऽश्वात् पतति चैत्र इत्यादौ चैत्रस्यापादानत्वापत्तिरिति मैवं, तत्क्रियाजन्यविभागाश्रयत्वे सति स्वनिष्ठत्वेन विभागजनकान्विततत्क्रियाशून्यत्वं तत्क्रियाऽपादानत्वमिति पतनव्यक्तिभेदेनापादानलक्षणस्य भिन्नत्वात्; एतल्लाभायैव विभागजनकत्वान्वयिक्रियाशून्यत्वमनभिधाय विभागजनकत्वं यत्क्रियायामन्वीयते, तत्क्रियाशून्यत्वमित्यभिहितं, सत्यन्तनिवेशाद् धावतोऽश्वात् पतति चैत्र इत्यादौ धावनक्रियाप्रयोज्यचैत्रनिष्ठपतनक्रियाशून्यवृक्षादौ न तत्क्रियाऽपादानत्वापत्तिः, एवञ्च धावतोऽश्वात् पतिताच्चैत्रादुष्णीषः पततीत्यादौ उष्णीषादिनिष्ठपतनक्रियाऽपादानत्वं चैत्रे इष्टमेव, भिन्नाया अव्याप्यवृत्तित्वे क्रियाशून्यत्वस्थाने क्रियावद्भेद एव निवेश्य इत्यलमतिविस्तरेण ॥ ८६ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

अपाये विभागे ध्रुवमवधीभूतमपादानमित्यर्थः, अवधित्वं स्वरूपसम्बन्धविशेषः प्रतीतिबलात् कल्प्यते । तेन धावतोऽश्वात् पतित इत्यादौ सक्रियस्याप्यश्वादेरपादानत्वं नानुपपन्नम् । अत एव वृक्षपर्णयोः क्रियया पर्णस्य विभागेऽपि वृक्षस्यावधित्वोपपत्तिरिति कश्चित् ॥ ८७ ॥

मतान्तरमाह—अपाय इति । अपादानमित्यर्थ इति । सूत्रस्येति शेषः। ननु निष्क्रियस्यैवापादानत्वात् तत्रैवावधित्वं स्वीकार्य्यं, तथा च सक्रियस्याश्वादेरवधित्वं न स्यादत आह—स्वरूपेति । प्रतीतिबलात्—धावतोऽश्वाद्विभजत इत्यादिधीबलात् । अत एवेति । धीबलात् सक्रियस्यापादानत्वादेवेत्यर्थः । अत्र च वृक्षावधिकविभागसत्त्वेऽपि "न वृक्षाद्विभजते" इति प्रयोगापत्तिः, निरूपकत्वस्य

वृत्त्यनियामकतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेनान्यसम्बन्धेनाभावस्य विभागे सत्त्वादित्यस्वरसः कश्चिदित्यनेन सूचितः ॥ ८७ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

वृक्षाद् विभजते पर्णमित्यादौ विभागावधित्वमपादानत्वम् , अवधित्वम् अवधिमत्त्वं वा स्वरूपसम्बन्धरूपं पञ्चम्यर्थः, इत्थञ्च वृक्षावधिकविभागाश्रयः पर्णमित्यन्वयबोधः । न चैवं स्वस्माद्विभजत इत्यपि स्यादिति वाच्यं, स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागाश्रयत्वस्य स्वस्मिन्नभावात्, इत्थञ्च अपादानपदं पञ्चमी च नानार्थमिति ध्येयम् । न चैवं परकीयस्पन्दनजन्यविभागाश्रयत्वेन वृक्षात् पर्णं स्पन्दत इत्यपि स्यादिति वाच्यं, परकीयक्रियेत्यत्र क्रियापदेन सकर्म्मकधात्वर्थस्य विवक्षितत्वात् ॥ ८८ ॥

निष्कृष्टमतमाह—वृक्षादिति । विभागावधित्वमपादानत्वं पञ्चम्यर्थोऽपि तदेवेति भावः । अवधित्वमिति । तस्य निरूपकत्वसम्बन्धेन विभागादावन्वयः । निरुक्तास्वरसादाह–अवधिमत्त्वमिति । अवधितानिरूपकत्वमित्यर्थः, तदेकदेशेऽवधित्वे वृक्षस्याधेयतया, तस्य च स्वरूपसम्बन्धेन विभागेऽन्वयः । ननूभयनिष्ठविभागस्यावधित्वमुभयत्रैवेति स्वस्माद् विभजत इत्यपि स्यादित्याशङ्क्य निषेधयति–न चेति । एवम्–अवधित्वादेः पञ्चम्यर्थत्वे । एवञ्चेति । वृक्षात् पततीत्यादौ निरुक्तविभागाश्रयत्वस्य वृक्षाद्विभजत इत्यादाववधित्वादेश्चापादानत्वरूपत्वे चेत्यर्थः । सकर्म्मकेति । स्पन्देश्चाकर्म्मकत्वादिति भावः । नन्वेवं वृक्षे स्पन्दापादानत्वव्यवहारवारणेऽपि वृक्षात् पर्णं स्पन्दत इत्यादिप्रयोगवारणासम्भवः, पञ्चम्या विभागजनकत्वादेः स्पन्दधात्वर्थेऽबाधादिति न वाच्यं, पञ्चम्यर्थविभागजनकत्वादेः सकर्म्मकधातूपस्थाप्यार्थान्वयित्वव्युत्पत्तेरिति ॥ ८८ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

व्याघ्राद्बिभेति, शत्रोः परित्रायत इत्यादौ पञ्चमी नापादाने, किन्तु "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति सूत्रेणानुशिष्टायाः पञ्चम्या हेतुत्वमर्थः, धातोश्च यथायथं भयं भयाभावश्चार्थः, पञ्चम्यर्थश्च हेतुत्वं धात्वर्थभये धात्वर्थताऽवच्छेदकोभयेऽन्वेति, च आख्यातार्थश्चाश्रयत्वं पर-

त्रानुकूलव्यापारश्च (१)व्याघ्रहेतुकभयाश्रयः शत्रुहेतुकभयाभावानुकूलव्यापारवानिति च यथायथमन्वयधीः ॥ ८९ ॥

तथा चेति—भावित्वेनानिष्टचिन्तनं भयपदार्थः, तदेकदेशेऽनिष्टे पञ्चम्यर्थहेतुत्वस्य जन्यत्वस्य वाऽन्वयः, तथा च व्याघ्रहेतुकं यदनिष्टं भावित्वेन तच्चिन्तनाश्रय इत्याकारको बोधः। नन्विदं सूत्रं व्यर्थं हेतुपञ्चम्यैवोपपत्तेरित्यत आह, इत्थञ्चेति—अत्रापि पञ्चम्या हेतुत्वार्थकत्वे चेत्यर्थः। तस्यैव—हेतुपञ्चमीविधायकसूत्रस्यैवेत्यर्थः। प्रपञ्चार्थं—विस्तारज्ञापनार्थम् ॥ ८९ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

एवं कूपादन्धं वारयतीत्यादौ पञ्चम्याः पतनं, द्वितीयाया धात्वर्थताऽवच्छेदकप्रतिबन्धान्वयि वृत्तित्वं, धातोः प्रतिबन्धानुकूलव्यापारः, कृतिराख्यातस्य चार्थः, तथा चान्धवृत्ति-कूपपतन-प्रतिबन्धानुकूलव्यापारानुकूलकृतिमानिति वाक्यार्थस्तु न युक्तः, यत्कूपे कस्यापि पतनमप्रसिद्धं तत्रासम्भवाद् अत एव द्वितीयायाः पतनं, पञ्चम्या धात्वर्थताऽवच्छेदकान्वयिवृत्तित्वं धातोश्चाभावानुकूलव्यापारोऽर्थः। तथा च कूपवृत्त्यन्धपतनाभावानुकूलव्यापारविषयकयत्नवानित्यर्थोऽपि न युक्तः, यदन्धस्य पतनमप्रसिद्धं तत्रासम्भवात्। किन्तु धातोरभावानुकूलव्यापारः, पञ्चम्या वृत्तित्वं, द्वितीयायाः प्रतियोगित्वम् अनुयोगित्वं वा (२)धात्वर्थताऽवच्छेदकीभूताभावान्वितमर्थः। अभावश्च कूपादिसमभिव्याहारवशात् पतनादिसम्बन्धेन बोध्यः। एवञ्च पतनादिसम्बन्धेन कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयक-यत्नवानित्यन्वयधीः ॥ ९० ॥

कूपादन्धं वारयतीत्यादौ पञ्चमी नापादाने इति तदर्थं वक्तव्यान्तरं विधेयमित्याशयवानाह—कूपादिति। एवमग्रेऽपि। इत्यादावित्यादिना सविषाद्मदमुं वारयतीत्यादिपरिग्रहः। पतनमित्यस्य अर्थ इत्यग्रेणान्वयः। धातोः—ण्यन्तवृञ्धातोः, तथा च वृञः प्रतिबन्धोऽर्थः, णेर्व्यापारोऽर्थः, प्रतिबन्धः—अनुत्पादः,

---

(१) इत्थञ्च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रप्रणयनं तस्यैव प्रपञ्चार्थमिति बोध्यम्।

(२) अयम्भावः, प्रतियोगिताया निरूपकत्वसम्बन्धेनान्वयित्वात्तस्य च वृत्यनियामकत्वादुपेक्ष्य इत्यरुचेराह "अनुयोगित्व" मिति। अनुयोगित्वञ्च स्वरूपसंबन्धवत्त्वमेव। स च वृत्तिनियामकत्वाद् ग्राह्य एव।

तदनुकूलव्यापारः—कूपे मा पत इत्यादिशब्दप्रयोगरूपः । अन्धवृत्तीति–कूपपतनप्रतिबन्धान्वयि । प्रतियोगित्वं—प्रतियोगिनि अभावस्य सम्बन्धः, न तु अभावे प्रतियोगिन इत्यत आह—अनुयोगित्वं वेति । अभावान्वितमर्थ–इति—आख्यातस्य कृतिरर्थ इत्यपि बोध्यम् ॥ ९० ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

एवमेतस्मात् सविषान्नाद् मित्रं वारयतीत्यादौ यत्सविषान्नस्य यन्मित्रस्य च भोजनमप्रसिद्धं तत्रापि भोजनादिसम्बन्धेन सविषान्नवृत्तिमित्रप्रतियोगिकाभावानुकूल–व्यापार–विषयक–यत्नवानित्यन्वयधीः । एवं सर्वत्र बोध्यम् । कूपादन्धमित्यत्र सविषान्नाद् मित्रमित्यत्र च यथायथं धातोः पतनं, भोजनम् , अभावानुकूलव्यापारश्चार्थः । पञ्चम्याश्च यथायथं द्वितीयार्थकर्तृत्वान्वितद्वित्वसहितं वृत्तित्वं कर्म्मत्वञ्चार्थः । द्वितीयायाश्च कर्त्तृत्वमर्थः । धात्वर्थताऽवच्छेदकीभूते चाभावे धात्वर्थस्य पतनादेरधिकरणत्वेन, द्वित्वावच्छिन्नस्य पञ्चम्यर्थवृत्तित्वद्वितीयार्थकर्त्तृत्वोभयस्य च प्रतियोगित्वेनान्वयो व्युत्पत्तिवैचित्र्यात् । एवञ्च पतनसामान्ये कूपवृत्तित्वान्धकर्त्तृत्वोभयाभावानुकूलव्यापारविषयकयत्नवानित्याद्यस्य, भोजनसामान्ये सविषान्नकर्म्मकत्वमित्यत्रकर्त्तृत्वोभयाभावानुकूलव्यापारविषयकयत्नवानिति च द्वितीयस्यान्वयबोधः ॥ ९१ ॥

पतनादिसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेर्मतान्तरमाह–के चित्तु कूपादन्धमित्यादिना वदन्तीत्यन्तेन । कर्मत्वञ्चार्थ इति—कूपादन्धमित्यत्र पञ्चम्या वृत्तित्वं द्वित्वञ्चार्थः । सविषान्नादित्यत्र पञ्चम्या द्वित्वं कर्मत्वञ्चार्थ इति बोध्यम् । अधिकरणत्वेनेति—अन्वय इत्यग्रेणान्वितम् । अधिकरणत्वेन—वृत्तित्वसम्बन्धेनेत्यर्थः । कूपेऽन्धपतनेऽपि अन्यपतनवारणस्थले कूपादन्धं वारयतीति प्रयोगवारणाय सामान्यपदम् । अन्धकर्त्तृत्वेति—कूपादन्धं वारयतीत्यादौ अन्धपदं तत्तदन्धपरम् , अन्यथा कस्यचिदन्धस्य कूपपतनेऽपि अन्यान्धकर्तृकपतनवारणस्थलेऽपि कूपादन्धं वारयतीत्यादिप्रयोगानुपपत्तिर्बोध्या, एवं कूपपदमपि तत्तत्कूपपरं, (१)बीजन्तु चिन्तनीयम् । आद्यस्येति—बोध इत्यग्रेणान्वयः ॥ ९१ ॥

---

(१) अन्यथा जातिविवक्षायां "कूपादन्धं वारयति" इति प्रयोगस्याप्रसिद्धिः प्रसज्ज्येतेति बोध्यम् ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

एवमेवाकाशं न पश्यति घट इत्यादौ।आकाशविषयताकदर्शनस्य घटवृत्तिदर्शनस्य चाप्रसिद्धान्वयो द्रष्टव्यः वक्ष्यमाणरीत्याऽत्र द्वितीयया विषयित्वरूपं कर्म्मत्वं, लक्षणया च घटवृत्तित्वं द्वित्वञ्च बोध्यते । धातुना चालौकिकभिन्नं जन्यप्रत्यक्षं, तत्रैव द्वित्वावच्छिन्नद्वितीयार्थान्वितनञर्थस्यान्वयः । आख्यातस्य तादृशोभयाभावान्वितनिरूपकत्वमर्थः, तथा च लौकिकप्रत्यक्षसामान्यवृत्त्याकाशविषयित्वघटवृत्तित्वोभयाभावनिरूपको घट इत्यन्वयबोधः ॥ ९२ ॥

एवमेव—अनयैव रीत्या । आकाशविषयताकेति—आकाशनिष्ठ-लौकिक-विषयताकेत्यर्थः, सौरभं पश्यतीत्यादिप्रयोगवारणाय तादृशधातुयोगे द्वितीयाया लौकिकविषयत्वार्थकत्वादिति भावः । नन्वाकाशपदस्याकाशवृत्तित्वे लक्षणा, तदभावश्च द्वितीयार्थलौकिकविषयत्वे बोध्यते, तथा चाकाशवृत्तित्वाभाववल्लौकिकविषयतावद्दर्शनाश्रयो घट इत्याकारकबोधस्य तत्रासम्भवात् कुतोऽप्रसिद्धिरित्यत आह—घटवृत्तिदर्शनस्य चेति । तथा च घटे दर्शनवत्त्वाप्रसिद्ध्या न तादृशबोधः सम्भवतीति भावः । लक्षणया चेति—द्वितीयापदेन लक्षणया चेत्यर्थः, आकाशस्यालौकिकविषयताकप्रत्यक्षशालिनि चैत्रे आकाशं न पश्यति चैत्र इत्यादिप्रयोगोपपत्तयेऽलौकिकभिन्नत्वविशेषणम्, आकाशकालीनो घट इत्याकारकघटनिष्ठलौकिकविषयताकप्रत्यक्षशालिनि चैत्रे आकाशं न पश्यति चैत्र इत्यादिप्रयोगोपपत्तये लौकिकविषयताकत्वमनिवेश्य गुर्वपि अलौकिकविषयताकान्यत्वं निवेशितम् । ईश्वरः पश्यतीत्यादिप्रयोगवारणाय जन्यत्वनिवेशनं तादृशप्रयोगस्येष्टत्वे तन्नोपादेयम् । अनुमित्यादिकमादाय पश्यति-प्रयोगवारणाय प्रत्यक्षनिवेशनम् । तथा चेति । प्रत्यक्षसामान्येति—घटस्य दर्शकेऽपि चैत्रे चैत्रो घटं न पश्यतीत्यादिप्रयोगापत्तिः पटदर्शने(१) चैत्रवृत्तित्वघटविषयकत्वोभयाभावसत्त्वादतः सामान्यपदम् अवच्छेदावच्छेदेनान्वयलाभाय । घटवृत्तित्वोभयाभावेति—अत्र वृत्तित्वं समवायेन ग्राह्यम्, अन्यथा पटादिदर्शनस्य कालिकादिसम्बन्धेन

---

(१) भवतु नाम पटदर्शने उभयाभावः, परन्तु चक्षुः सन्निकर्षे घटस्य दर्शकेऽपि चैत्रे प्रत्यक्षसिद्धत्वेन घटविषयत्वं चैत्रवृत्तित्वञ्च स्वभावतोऽपिलब्धं स्यात् । न तदुभयाभावमादाय लौकिकप्रत्यक्षापलापः कर्त्तुं शक्यते ।

घटवृत्तितया घटः पटं न पश्यतीतिप्रयोगानुपपत्तिः, घटत्वोभयाभावनिरूपकत्वं स्वनिरूपितप्रतियोगिताऽऽश्रयवृत्ति स्वनिरूपकतया बोध्यम् ॥ ९२ ॥

मतान्तरवाक्यम्—

( अत्र केचित् आकाशविषयत्वाभाववच्चाक्षुषज्ञानाभाववान् घट-इत्यन्वयबोधः, अन्यथाऽनुपपत्त्याऽभावस्य वारद्वयान्वयस्वीकारादिति तदसत्, आकाशं न पश्यति चैत्र इत्यादिसाधारण्याभावात् , चाक्षुष-ज्ञानवच्चैत्रादौ तदभावान्वयासम्भवात् ) (१) ॥ ९३ ॥

चाक्षुषज्ञानवदिति । घटादिविषयतावच्चाक्षुषज्ञानवदित्यर्थः ॥ ९३ ॥

आक्षेपनिराकरणपूर्वकसिद्धान्तवाक्यम्—

न चाकाशं न पश्यत्यभाव इत्यादौ समवायसम्बन्धेनाभाववृत्तित्व-स्याप्रसिद्ध्या नोक्तक्रमेण सामञ्जस्यमिति वाच्यं, तत्र हि धातोर्निरुक्तलौ-किकप्रत्यक्षप्रतियोगित्वं समवायश्चार्थः, द्वितीयायाश्च विषयिप्रतियोगि-त्वम् अभावानुयोगिकत्वं त्रित्वञ्चार्थः, एकदेशे च विषयित्वे प्रकृत्यर्थ-स्याकाशादेर्निरूपकत्वेनान्वयः, तथा च निरुक्तलौकिकप्रत्यक्षसमवाये आ-काशविषयिप्रतियोगिकत्वाभावानुयोगिकत्वोभयत्वावच्छिन्नो योऽभावस्त-न्निरूपकोऽभाव, इत्यन्वयधीः ॥ ९४ ॥

**तत्र हीति** । हि—यतः । **निरुक्तेति** । अलौकिकविषयताकभिन्नजन्यप्रत्य-क्षेत्यर्थः, तथा च समवायसम्बन्धसामान्ये आकाशविषयिप्रतियोगिकत्वेति—प्रथम-दलानुक्तौ आकाशपदार्थस्यानन्वयापत्तेः । न च तादृशधात्वर्थस्यैकदेशेऽलौकिकवि-षयत्वे आकाशपदार्थस्याधेयतयाऽन्वयसम्भवात् कथं तदुक्तिरिति वाच्यं, तथा सति अलौकिकविषयताकभिन्नघटादिप्रत्यक्षशालिनि चैत्रे आकाशं न पश्यति चैत्र-इति प्रयोगानुपपत्तेः, तत्र समवाये आकाशनिष्ठालौकिकविषयताकभिन्नघटादिप्रत्य-क्षप्रतियोगिकत्वचैत्रानुयोगिकत्वयोः सत्त्वात् । आकाशविषयकालौकिकप्रत्यक्षशा-लिनि चैत्रे आकाशं न पश्यति चैत्र इति, प्रयोगानुपपत्तिरतो द्वितीयदलं, तादृशो-भयाभावनिवेशे तादृशोभयाभावनिरूपकत्वस्य परम्परयाऽभावेऽसत्त्वाद् अभावप-दार्थस्यानन्वयापत्तिरतस्तृतीयदलघटितत्रित्वावच्छिन्नाभावनिवेशः ॥ ९४ ॥

---

( १ ) कोष्ठकस्थः पाठः प्राचीनपुस्तके नैव लभ्यते ।

मतान्तरवाक्यम्—

केचित्तु तत्र धातोर्लौकिकप्रत्यक्षप्रतियोगिकसमवायोऽर्थः, द्वितीयायाश्च विषयिप्रतियोगिकत्वसमभावानुयोगिकत्वञ्चार्थः, विषयित्वे चैकदेशे प्रकृत्यर्थस्याकाशस्य निरूपकतयाऽन्वयः, तथा च निरुक्तलौकिकप्रत्यक्षसमवाये आकाशविषयिप्रतियोगिकत्वाभावानुयोगिकत्वोभयत्वावच्छिन्नस्य योऽभावस्तन्निरूपकोऽभाव इत्यन्वयधीः।

नन्वाकाशं न पश्यत्यन्ध इत्यादावुक्तबोधानुसारेण संशयविरोधासम्भवः, न च मणिमन्त्रादिन्यायेन तत्सम्भव इति वाच्यं, मानाभावात्। अत्र नवीनाः-लौकिकविषयिताविशिष्टज्ञाननिरूपितसमवायसम्बन्धेन आकाशविषयिताविशिष्टज्ञानाभावाश्रय इत्यन्वयबोधः, तथा च ग्राह्याभावमुद्रया आकाशं पश्यति न वेत्यादिसंशयविरोधित्वसम्भव इति। अनयैव दिशाऽप्रसिद्धस्थले बोधा द्रष्टव्या इत्यपि वदन्ति(१) ॥ ९५ ॥

लाघवादाह-यद्वेति। न चैतत् कल्पत्रय एव सौरभस्य लौकिकप्रत्यक्षशालिनि चैत्रे, चैत्रः सौरभं न पश्यतीतिप्रयोगानुपपत्तिरिति वाच्यं जन्यप्रत्यक्षपदस्य चाक्षुषपरत्वात्। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगिताऽवच्छेदकत्वोपगमे निरूपकतासम्बन्धेनाकाशाभावो द्वितीयार्थलौकिकविषयत्वेऽन्वीयते, अन्धादिपदसमभिव्याहृतस्थले चाभावस्य द्विधाऽन्वयः, तथा चाभाववल्लौकिकविषयताकदर्शनाश्रयत्वाभाववान् अन्ध इत्यन्वयधीरिति वस्तुतस्त्वित्यादिना केनचिदभिहितं तदसत्, घटादिविषयलौकिकप्रत्यक्षवति चैत्रे चैत्र आकाशं न पश्यतीत्यादिप्रयोगसाधारण्याभावात्। नन्वाकाशं न पश्यत्यन्ध इत्यादावुक्तबोधानुसारेणेत्यादिपाठः क्वचित्पुस्तकीयः, स च चिन्तनीयः। ननु घटं न पश्यति चैत्र इत्यादौ अलौकिकविषयताकान्यजन्यप्रत्यक्षसामान्यान्तर्गते घटस्य लौकिकप्रत्यक्षेऽपि तत्र घटविषयताकत्वचैत्रनिष्ठत्वयोः सत्त्वान्नोक्तक्रमेण बोधोपपत्तिरित्यत आह-अप्रसिद्धस्थल-इति। तथा च अप्रसिद्धस्थले एव तादृशरीत्या शाब्दबोधः, प्रसिद्धस्थले तु घटविशिष्टलौकिकविषयताकचाक्षुषाभाववान् चैत्र इत्याद्याकारको बोधः। लौकिकविषयत्वन्तु द्वितीयार्थ इति ॥ ९५ ॥

---

(१) एतच्चांशः प्राचीनपुस्तके नोपलभ्यते।

सिद्धान्तसाधकप्रकारवाक्यम्—

हिमवतो गङ्गा प्रभवतीत्यादौ न पञ्चम्या हेतुत्वं धातुना च उत्पत्तिः प्रत्याय्यते, तथा सति "जनिकर्त्तुः प्रकृतिः" (१।४।३० पा०) इत्यत एवोपपत्तौ "भुवः प्रभवः" (१।४।३१ पा०) इति सूत्रप्रणयनवैयर्थ्यात्, । किन्तु प्रकर्षेण भवनं प्रभवनं प्रकाशः, आद्यबहिःसंयोग इति यावत् । स एव धात्वर्थः । बहिः पदार्थः प्रकृते भूखण्डमेव, पञ्चम्यर्थश्च संयोगध्वंसाव्यवहितोत्तरक्षणवृत्तित्वम् , आख्यातार्थ आश्रयता, तथा च हिमवत्संयोगध्वंसाव्यवहितोत्तरक्षणवर्त्याद्यपृथिवीसंयोगाश्रयतावती गङ्गा इत्यन्वयधीः । वैकुण्ठात् काशीतो वा गङ्गा प्रभवतीत्यप्रयोगाद् अव्यवहितेति आद्येति च, वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसम्बन्धस्य, काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे चाद्यस्य तस्य चाभावात् । वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्येत्यादावप्ययमेवार्थः । परन्तु तत्र वल्मीकाग्रोर्द्देशो बहिःपदार्थ इति विशेषः । तथा च वल्मीकाग्रसंयोग-ध्वंसाव्यवहितोत्तरक्षणवर्त्याद्यवल्मीकाग्रोर्ध्वदेशसंयोगाश्रयो धनुः खण्डमित्यन्वयबोधः(१) ॥ ९६ ॥

भूसम्बन्धस्येति—अभावादित्यग्रेणान्वयः । तस्य—भूसम्बन्धस्य । अयमेवार्थ इति—वल्मीकाग्रसंयोगध्वंसाव्यवहितोत्तरक्षणवर्त्याद्यवल्मीकाग्रोर्ध्वदेशसंयोगवदिन्द्रस्य धनुःखण्डमित्याकारकस्तत्र बोधः । वल्मीकः—सातपो मेघः, आखण्डलः—शक्रः ॥ ९६ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

श्रीकृष्णात् पराजयते शिशुपालः, अध्ययनात् पराजयते बाल इत्यादौ धातोरसहिष्णुता, पञ्चम्याः कर्म्मत्वम् , आख्यातस्याश्रयत्वमर्थः। श्रीकृष्णं न सहते, अध्ययनं न सहत इति तदर्थविवरणात् । असहिष्णुता चो भयत्रैव द्वेषविशेषः, अभिभवाशक्यत्वज्ञानमशक्यत्वज्ञानं वा । इत्थञ्च श्रीकृष्णविषयकद्वेषवान् अभिभवाशक्यत्वज्ञानवान् वा इत्याद्यस्य, अध्ययनविषयकद्वेषवान्।अशक्यत्वज्ञानवान् वा इति द्वितीयस्यान्वयबोधः । विप्राद् धनमादत्त इत्यादौ पञ्चम्या यथेष्टविनियोगोऽर्थः । न तु स्वत्वम्

(१) इत्यपि न प्राचीने प्रतौ प्रतीयते ।

चौराद् धनमादत्त इत्यादौ चौरस्य स्वत्वाभावेन तदसम्भवात्। धातोर्यथेष्टविनियोगफलकस्वीकारोऽर्थः, न तु स्वत्वजनकस्वीकारः, विप्राद् धनमादत्तो चौर इत्यादौ तदसम्भवात्। पञ्चम्यर्थयथेष्टविनियोगस्य चाव्यवहितोत्तरत्वसम्बन्धेन धात्वर्थताऽवच्छेदकयथेष्टविनियोगेऽन्वयः। अव्यवहितत्वञ्च स्वसमानविषयकपुरुषान्तरीयविनियोगाव्यवहितभिन्नत्वं, तेन शूद्रतः प्रतिगृह्य विप्रेण दत्तं धनमादातरि शूद्रादादत्ते इति न प्रयोगः। इत्थञ्च विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्टविनियोगफलकस्वीकारवानित्यन्वयबोधः॥ ९७॥

श्रीकृष्णात् पराजयत इत्यादि। कर्म्मत्वमिति—प्रकृते विषयतारूपम्। धातोरसहिष्णुताऽर्थकत्वे तान्त्रिकाणां स्वरसमाह—श्रीकृष्णमिति। उभयत्रैव द्वेष वशेष इति—कृष्णात् पराजयत इत्यत्र अभिभवेति, अध्ययनात् पराजयत—इत्यत्राशक्यत्वेति। असाधारणत्वमादाय बोधमाह—इत्थञ्चेति। यथेष्टविनियोगः,—उपभोगहेतुव्यापारः, स च ममेदमिति धीः। तदसम्भवात्—स्वत्वधनकस्वीकारासम्भवात्। नन्वव्यवहितोत्तरत्वं स्वध्वंसाधिकरणत्वे सति स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वं, तथा च विप्रविनियोगविलम्बाद् विनियोगवति द्रव्ये विप्राद् धनमादत्ते चौर इति प्रयोगो न स्यादित्युक्तम्—अव्यवहितत्वञ्चेति। स्वेति—स्वोत्तरसमानविषयकविनियोगानुत्तरत्वमत्राव्यवहितत्वं बोध्यं, न तु पुरुषान्तरीयत्वमपि निविष्टं, यत्र विप्रस्यैकविनियोगोत्तरविनियोगान्तरं ततः चौरविनियोगस्तत्र विप्रीयचरमविनियोगमादायैव विप्राद् धनमादत्ते चौर इति प्रयोगसम्भवात्॥ ९७॥

सिद्धान्तसाधकप्रकारवाक्यम्—

अधर्म्माज्जुगुप्सत इत्यादौ पञ्चम्याः कर्म्मत्वं, धातोर्निन्दाऽर्थः, अधर्म्मं निन्दतीत्यर्थः। अधर्म्माद्विरमतीत्यादौ धातोः कारणानन्तरमकरणं पञ्चम्याः कर्मत्वमर्थः, स च करणेऽकरणे चान्वेति। अधर्मं कृत्वा पुनर्न करोतीत्यर्थः। एवं धर्म्मात् प्रमाद्यतीत्यादौ पञ्चम्या विषयित्वं, धातोरनवधानम्, आख्यातस्याश्रयत्वमर्थः, तथा च अधर्मविषयकानवधानाश्रय—इति शाब्दधीः। उपाध्यायादन्तर्द्धत्त इत्यादौ धातोः स्वविषयकप्रत्यक्षविरोधिव्यापारः, पञ्चम्याः सम्बन्धित्वं धात्वर्थताऽवच्छेदकप्रत्यक्षान्वितम्,

आख्यातस्य कृतिरर्थः, तथा चोपाध्यायसम्बन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमानित्यन्वयबोधः ॥ ९८ ॥

निन्दतीति—निन्दा—द्वेषः, अधर्मविषयकद्वेषाश्रय इत्यर्थः । अन्वेतीति—व्युत्पत्तिवैचित्र्यादिति भावः । अवधानं—बुभुत्सा । व्यापार इति ।—अर्थ इति परेणान्वयः । अन्वितं—सम्बन्धित्वमित्यन्वयः ॥ ९८ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

दण्डाद् घटः, धूमाद्वह्निमानित्यादौ पञ्चमी नापादाने क्रियायोगाभावात् किन्तु जनकत्वज्ञापकत्वरूपे हेतुत्वे जन्यत्वज्ञाप्यत्वरूपे हेतुमत्त्वे वा हेतावित्यधिकारे "विभाषा गुणेऽस्त्रियाम्" ( २।३।२५ पा० ) इति सूत्रेणानुशिष्टा । न चैवं "जनिकर्तुः प्रकृतिः" ( १।४।३० पा० ) इति सूत्रं व्यर्थं, काष्ठात्पचतीत्यत्रेव दण्डाज्जायत इत्यादावप्युत्पत्तिरूपधात्वर्थनिरूपितहेतुहेतुत्वबोधकपञ्चम्या हेताविति सूत्रेणैव सम्भवादिति वाच्यम्, उत्पत्तेरहेतुकत्वेऽपि सावधिकत्वाद् उत्पत्तिनिरूपिततादृशस्वरूपसम्बन्धस्य हेतुत्वादन्यत्वेन "हेतौ" (२।३।२३ पा०) इति सूत्रेण तत्र पञ्चम्या अलाभात् ९९

क्रियायोगाभावादिति—क्रियान्वय्यवधित्वमेवापादानत्वमिति भावः । नन्वर्थान्वयानुरोधादाह—जन्यत्वेति—यथासंख्यमन्वयः । एवम्—अत्रत्यपञ्चम्या हेतुत्वार्थकत्वे । सम्भवात्—अनुशिष्टपञ्चमीतो बोधसम्भवात् । उत्पत्तेरहेतुकत्वेऽपि—उत्पत्तेर्जनकतानिरूपकत्वाभावेऽपि, सावधिकत्वात्—सप्रयोजकत्वात् । ननु प्रयोजकत्वं जनकत्वमेवान्यद्दुर्वचमित्यत आह—तादृशस्वरूपसम्बन्धस्येति—तथा च स्वरूपसम्बन्धविशेषरूपस्य प्रयोजकत्वस्य हेतुत्वादन्यत्वेन न "हेतौ" इति सूत्रात् पञ्चमी, किन्तु "जनिकर्तुः प्रकृतिः" इति सूत्रेणैवेति तत् सूत्रं न व्यर्थमिति भावः ॥ ९९ ॥

## अधिकरणत्वविवेचनम्—

सिद्धान्तवाक्यम्—

(१)अधिकरणत्वञ्च न धर्मसम्बन्धः, सम्बन्धस्य संयोगादिरूपस्य

---

( १ ) अत्रेदमवधेयम्—

वैयाकरणनये—आश्रित्य विषयीकृत्य वसेत् कर्ताऽथ कर्मणा ।
क्रियया सिद्धप्रथमा क्रियाद्वारेण वर्त्तते ।
शास्त्रेऽधिकरणं तत् स्यात् कैलासेऽस्ति महेश्वरः ॥

द्विष्ठत्वेन बदरादेरपि कुण्डाद्याधारत्वापत्तेः। न च कुण्डं न बदरधर्म इति वाच्यं, तर्हि स्वधर्मसम्बन्धोऽधिकरणत्वं पर्य्यवसितं स्वधर्मत्वञ्च स्वाधेयत्वं, स्वाधेयत्वञ्च यदि स्वनिरूपिताधिकरणसम्बन्धित्वं तदाऽन्योन्याश्रयः (१)अन्यच्च दुर्वचम् ॥ १०० ॥

अधिकरणत्वं निरूपयितुमाह—अधिकरणत्वञ्चेति। धर्म्मेति—आधेयतावदित्यर्थः। स्वधर्म्म इति—स्वस्य धर्म्मसम्बन्ध इत्यर्थः। स्वनिरूपिताधिकरणेति—अधिकरणपदम् अधिकरणतापरं, तथा च स्वनिरूपितं यदधिकरणतासम्बन्धित्वम् अधिकरणतानिरूपकत्वमित्यर्थः, अधिकरणताज्ञाने आधेयत्वज्ञानस्य आधेयत्वज्ञानेऽधिकरणत्वज्ञानस्यापेक्षिततयाऽन्योन्याश्रय इत्यर्थः ॥ १०० ॥

---

अभिव्यापकमौपश्लेषिकमाभ्यर्णिकं चौवम्।
वैषयिकञ्च चतुर्द्धा मतमधिकरणं विशेषज्ञैः॥
तिलेषु तैलमित्यादावभिव्यापकमुच्यते।
वने सिंहो वसत्यत्र औपश्लेषिकमीरितम्॥
साधुर्वसति गङ्गायामित्यत्राभ्यर्णिकं मतम्।
धर्मे वेदाः प्रमाणं स्युरत्र वैषयिकं स्मृतम्॥

तत्त्वञ्च, कर्तृकर्मद्वारा तन्निष्ठक्रियायाः साक्षात्क्रियाऽऽधारत्वम्। "कारके" इत्यधिकाराद् आधारस्योपस्थितत्वात्तथैव लभ्यते। हरिणाऽपि तथैव समाहितम्।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।
उपकुर्वत्क्रिया सिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥ इति॥

तथा च "कटे आस्ते चैत्र" इत्यादिवाक्यात्कटाधिकरणकचैत्रकर्तृकं शयनमिति बोधः।

नैयायिकनये तु—आधारसप्तम्या आधेयत्वमात्रमर्थस्तस्य क्रियायामन्वयः। आधाराधेयभावश्च न संयोगादिरूपसम्बन्धात्मकः, कुण्डादिसंयोगिनो बदरादेरपि कुण्डाधारताप्रसङ्गात्। अपि तु पदार्थान्तरमेव स च सम्बन्धविशेषावच्छिन्नः संयोगेनाधिकरणं समवायेनाधिकरणमित्यादिव्यवहारात्। तथा च "गेहे स्थाल्यामोदनं पचती"त्यादौ निरुक्तसम्बन्धेन, गेहाधिकरणकस्थाल्यधिकरणकौदनकर्मकपाकानुकूलकृतिमानित्यन्वयबोधः।

(१) अन्योन्याश्रयत्वञ्च, स्वगोचरज्ञानाधीनज्ञानाधीनज्ञानगोचरत्वम्। प्रकृते स्वपदेन अधिकरणत्वं प्रत्येतव्यम्। तथा च अधिकरणत्वज्ञानाधीन आधेयत्वज्ञानम्, तदधीनज्ञानञ्च अधिकरणत्वज्ञानमितिप्रकारेण ज्ञेयम्। अन्योन्याश्रयदूषकत्वन्तु स्वस्वस्मिन्नापादकत्वरूपम्।

सिद्धान्तसाधकवाक्यम्—

**नापि उत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयत्वमधिकरणत्वम्, उत्पत्तयेऽपेक्षणीयञ्च कार्य्यस्य समवायिकारणं, स्थितये घटादेर्भूतलादि, ज्ञप्तये च जात्यादेः समवायि, अभावसमवाययोश्च स्वरूपसम्बन्धीति वाच्यम्, अपेक्षणीयत्वं हि न जनकत्वम्, अतीन्द्रियजात्यधिकरणेऽव्याप्तेः, ( तस्य लौकिकप्रत्यक्षाभावेन सन्निकर्षाद्यघटकत्वेन जनकत्वाभावात् ) दण्डादेर्घटाद्यधिकरणत्वापत्तेश्च नाप्यधिकरणत्वम् आत्माश्रयात्(१) ।**

**नापीति । उत्पत्तय इति**—तदुत्पत्त्यपेक्षणीयत्वं तदधिकरणत्वम्, एवं स्थित्यादावपि बोध्यम् । **जात्यादेः समवायीति** । घटादिमध्यक्तेर्जातिज्ञानापेक्षणीयत्वञ्च सन्निकर्षघटकतया बोध्यम्, एवमभावसमवायज्ञानेऽपि बोध्यम् । (२) **अतीन्द्रियेति**—इदमुपलक्षणम्, अतीन्द्रियाभावसमवाययोरधिकरणे चाव्याप्तिरपि बोध्या । **दण्डादेरिति**—दण्डादेर्घटानामुत्पत्तिप्रयोजकत्वादिति भावः । **आत्माश्रयादिति** । इदमुपलक्षणं, भवने उत्पन्नस्य प्राङ्गणं गतस्य घटादेरधिकरणेऽव्याप्तिरपि द्रष्टव्या ॥ १०१ ॥

मतान्तरनिराकरणपूर्वकसिद्धान्त साधकप्रकारवाक्यम्—

**नापि तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्त्तत्वं पतनवद्द्रव्यस्याधिकरणत्वम् ।** मूर्त्तत्वेन विशेषणाद् ब्रह्माण्डधारकसंयोगाश्रयेऽपीश्वरे नातिव्याप्तिः । पतनशून्यस्य च मूर्त्तस्य विलक्षणसंयोगवत्त्वम्, अत एव कमलकोरकान्तर्वर्त्त्युत्पन्नविनष्टभ्रमराद्यधिकरणेऽपि तत्पतनाप्रसिद्ध्या नाव्याप्तिः । गुणक्रियाजात्यादेश्च तत्समवायित्वम् । अभावसमवायादीनाञ्च तत्स्वरूपसम्बन्धित्वम्, एवं परम्परासम्बन्धेनापि निर्वाच्यमिति वाच्यम्, अननुगमात्, भूतले घट इत्यादावुक्तक्रमेण सप्तम्यर्थतायां गौरवादननुगतत्वाच्च ॥ १०२ ॥

---

( १ ) आत्माश्रयत्वञ्च स्वज्ञानाधीनज्ञानविषयत्वम् । अस्यापि दूषकत्वमन्योन्याश्रयसमानमेव ।

( २ ) अयम्भावः—चक्षुःसंयुक्ते घटे यथा समवायादिसन्निकर्षकारणम्, तथा अभावप्रत्यक्षे भूतलादिवृत्तिकः स्वरूपसम्बन्ध एव सन्निकर्षघटकतया प्रविष्ट इति बोध्यम् ।

शङ्कते—**नापीति** । स्वस्मिन् स्वपतनप्रतिबन्धकसंयोगवत्त्वात् स्वस्मिन् स्वाधिकरणत्ववारणाय **तद्भिन्नेति** । सत्यन्तदलमात्रोक्तौ तच्छून्यस्यापि देशस्य तदधिकरणत्वापत्तिरतो विशेष्यदलम् , एकपतनप्रतिबन्धकसंयोगवति अन्यस्याधिकरणत्ववारणाय विशेष्यदले तदिति । **ईश्वरे नातिव्याप्तिरिति** । इदमापाततो ब्रह्माण्डपतनस्याप्रसिद्ध्या मूर्त्तत्वानुक्तावपीश्वरे नातिव्याप्तिः, किन्तु विभ्वात्मनस्तच्छरीराधिकरणत्ववारणाय । **मूर्त्तत्वमिति** । गगनादिवारणाय मूर्त्तस्येति पतनशून्यद्रव्यविशेषणम् । **विलक्षणेति** । वैलक्षण्यञ्च पतनाभावकल्प्यमिति भावः । **अत एव**—विलक्षणसंयोगवत्त्वस्याधिकरणतारूपत्वादेव । पतनशून्यद्रव्यस्याधिकरणत्वं सङ्गमयति—**कमलकोरकेति** । कमलकोरकान्तर्वर्त्ती—कमलकोरकमध्यस्थायी सन् तत्रैव उत्पन्नविनष्टो यो भ्रमरादिरित्यर्थः, तेन न तत्रोत्पन्नत्वादिकथनेन तत्स्थायित्वलाभात् स्वातन्त्र्येण तत्स्थायित्वकथनव्यर्थता, न वा तत्स्थायिनस्तत्रोत्पन्नविनष्टस्यापि अन्यत्र स्थायित्वेन तत्पतनं प्रसिद्धं, तत्र स्थायिनोविनष्टस्याप्यन्यत्रोत्पत्तिमत्वेन तथैव पतनप्रसिद्धिसम्भवात् तत्रोत्पन्नत्वकथनं, तादृशस्याप्यन्यत्र विनष्टत्वेऽन्यत्रैव पतनसम्भवात् तत्र विनष्टत्वकथनम् । न चान्यत्रोत्पन्नस्य विनष्टस्यापि अन्यत्र स्थायित्वात् तन्मात्रस्थायित्वाभावादेव तद्वारणसम्भवात् तत्कथनं व्यर्थमिति वाच्यं, तत्कथनादेव तन्मात्रस्थायित्वलाभादिति ध्येयम् । नन्वनुगतधर्मानास्त्येवेत्यत आह—**भूतले घट इति** । शक्यताऽवच्छेदकगौरवमुक्त्वा शक्तिबाहुल्यमाह—**अननुगतत्वाच्चेति** । क्वचिदननुभवाच्चेति पाठः ॥ १०२ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

किन्तु प्रतियोगित्वानुयोगित्ववद् आधेयत्वमधिकरणत्वञ्च विलक्षणप्रतीतिसाक्षिकः (१)स्वरूपसम्बन्धविशेषः । (२)स चातिरिक्तोऽनति-

---

(१) विजातीयप्रतीतिप्रमाणक इत्यर्थः ।

(२) अयं भावः—"घटो नास्ति" इत्याकारिकाया अभावे घटप्रकारिकायाः प्रतीतेः, विशिष्टबुद्धित्वेन विशेषणविशेष्यसम्बन्धविषयकत्वसाधकत्वेन, इतरसम्बन्धविषयकत्वबाधवशात् यथा स्वरूपसम्बन्धात्मिकताया प्रतियोगिताया अनुयोगिताया वा सम्बन्धविधयाऽवगाहित्वं सिद्ध्यति । तथैव घटमित्यादिवाक्यजन्यायाः कर्मत्वे घटप्रकारिकाया इतरसम्बन्धबाधसहकृतेन विशेषणविशेष्यसम्बन्धविषयकत्वसाधकेन अधिकरणताया आधेयताया वा सम्बन्धविधया स्वरूप-

(१)रिक्तो वेत्यन्यदेतत्। गृहे चैत्रः पचतीत्यादौ पाकस्याधः सन्तापनस्य(२) साक्षाद् गृहावृत्तित्वेऽपि कर्तृघटितपरम्परया(३)ऽधिकरणत्वम् आधेयत्वं वा (४)पाकादिक्रियाऽन्वितसप्तम्यर्थः ॥ १०३ ॥

प्रतियोगित्वेति । अभावस्येत्यादिः । नन्वेवं गेहादेः साक्षात् पाकानधिकरणत्वेन गेहे पचतीत्यादिप्रयोगो न स्यादत आह—गृह इति । गृहावृत्तित्वे हेतुगर्भविशेषणमाह—अध इति । स्थाल्यधोदेशावच्छेदेन वह्निसंयोगानुकूलव्यापारस्येत्यर्थः । नञर्थान्वयानुरोधादाह—आधेयत्वमिति ॥ १०३ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

स्थाल्यामोदनं पचतीत्यादावधः सन्तापनस्य पाकस्य साक्षात् स्थाल्यवृत्तित्वेऽपि कर्मघटितपरम्परयाऽधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः पाकादावन्वेति । अनुभवबलेन तथैव व्युत्पत्तेरिति, वृद्धास्तदाहुः,—

---

सम्बन्धात्मिका अवगाहित्वसिद्धिर्निराबाधा । तथा च चर्चितानुमानमूलाया अधिकरणताया आधेयतायाः वा सप्तम्यर्थमिति बोध्यम् ।

(१) आधाराधेयाभ्यां भिन्नोऽभिन्नो वेति भावः ।

(२) नन्वधः सन्तापनस्य चैत्रादिवृत्तितया गृहे बाधेन गृहपदोत्तरं सप्तम्याः न साधुत्वमिति चेन्न, स्वाश्रयकर्तृमत्त्वसम्बन्धेन तस्य गृहेऽपि वृत्तित्वसम्भवात् ।

(३) सम्बन्धित्वमित्यर्थः, अन्यथा उक्तपरम्पराया अधिकरणत्वनियामकतया तत्सम्बन्धावच्छिन्नाधिकरणत्वस्याप्रसिद्धत्वेनासङ्गतिः स्यात् । अथवा दिक्कृतविशेषणता विशेषसम्बन्धावच्छिन्नाधिकरणत्वं तत्र सप्तम्यर्थो वाच्यो मूर्तमात्रस्य दिगुपाधितया गृहेऽपि तथाऽधिकरणत्वसम्भवात्। अथवा तादृशप्रतीत्यनुरोधेन अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण पाकस्य गृहवृत्तित्वस्यापि प्रामाणिकत्वात् ।

(४) अत्र वाकारः प्रथमपक्षेऽनास्थायाम्, तद्बीजन्तु "चैत्रो गृहे पचति नतु चत्वरे" इत्यत्र वाक्यार्थाप्रसिद्धिरेव । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगिताऽनवच्छेदकतया निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकचत्वरनिष्ठाधिकरणत्वाभावस्याप्रसिद्धत्वात् । तत्र चैत्रे चत्वरवृत्त्यधिकरणतानिरूपकपाकाभावः प्रतीयते, नतु पाके तथाऽधिकरणत्वाभाव इति नोक्तदोष इति न शङ्कनीयम्, "चैत्रो गृहे पचति नतु गगने" इत्यत्र गगननिष्ठायास्तादृशाधिकरणताया अप्रसिद्धतया तद्घटितप्रतियोगिनोऽसम्भवित्वेन तथाऽभावस्यासम्भवात् ।

आधेयतायाः सप्तम्यर्थत्वे तु तस्य स्वरूपसम्बन्धेनैव व्यापारेऽन्वीयमानतया तस्य च वृत्तिनियामकत्वेनाभावप्रतियोगितावच्छेदकतया पूर्वोक्तदोषासम्भवात् ।

"कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥" इति । एवञ्च कर्त्तृकर्म्मान्यतरद्वारा क्रियाऽऽश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वमिति ॥ १०४ ॥

कर्म्मधरितेति—स्वजन्यवह्निसंयोगाश्रय-तण्डुलाश्रयत्वसम्बन्धेनेत्यर्थः । तथैव—कर्त्तृकर्म्मान्यतरद्वाराऽधिकरणत्वार्थकत्वे एव । अत्रैव प्राचां संवादमाह—तत्रेति । कर्त्तृकर्म्मान्यतरद्वाराऽधिकरणत्वार्थकत्व इत्यर्थः । आहुरित्यस्य कर्म्माह—कर्त्तृकर्मेत्यादिना इतीत्यन्तेन । असाक्षाद्धारणे हेतुगर्भविशेषणं कर्त्तृकर्मव्यवहितामिति । उपकुर्वत्—जनकीभवत्, क्रियासिद्धौ—क्रियोत्पत्तौ ॥ १०४ ॥

सिद्धान्तसिद्धवाक्यम्—

वस्तुतस्तु परम्परया क्रियाऽऽश्रयत्वमेवाधिकरणत्वम्, अत एव प्राङ्गणस्थेन दीर्घदण्डादिना काष्ठादिचालनद्वारा गृहान्तर्गत्तिपाककरणे कर्त्तद्वारा क्रियाऽनाश्रयत्वेऽपि गृहस्य, गृहे पचतीति प्रयोगः । न चैवं परम्परयेति व्यर्थम्, अधः सन्तापनं हि अधोवह्निसंयोगानुकूलकाष्ठवह्न्यादिव्यापारः, तस्य च साक्षात् काष्ठवह्न्यादिवृत्तित्वेऽपि काष्ठे वह्नौ वा पचतीति प्रयोगाभावात् । एवं पथि गच्छतीतिवत् स्वस्मिन् गच्छतीति प्रयोगाभावोऽपि तत्पदमिति (१)॥ १०५ ॥

वक्ष्यमाणदोषादाह—वस्तुतस्त्विति । अत एव—कर्त्तृकर्म्मान्यतरद्वारा इत्यस्याभिवेशादेव । एवं—कर्त्तृकर्म्मान्यतरद्वारा इत्यस्य परित्यागे । व्यर्थमिति—न चेति पूर्वान्वयि, तत्र हेतुः प्रयोगाभावादित्यन्तम् । अध इति—स्थाल्यधोदेशावच्छेदेनेत्यर्थः। अत्र साक्षात् क्रियाऽनाश्रयत्वे सति परम्परया क्रियाऽऽश्रयत्वमेवाधिकरणत्वम्, अन्यथा काष्ठादौ साक्षात् क्रियासत्त्वेऽपि स्वसमानकालीनत्वादिरूपपरम्परयाऽपि तादृशक्रियाऽऽश्रयत्वात् काष्ठे पचतीत्यादिप्रयोगस्य दुर्वारत्वापत्तेः। वस्तुतस्तु आकाङ्क्षावैचित्र्यादेव तादृशपरम्परया क्रियाऽधिकरणत्वबोधवारणसम्भवात् परम्परया क्रियाऽऽश्रयत्वमेवाधिकरणत्वं, लक्ष्यन्तु साक्षात् क्रियाऽनाश्रयत्वघटितमिति बोध्यम् ॥ १०५ ॥

---

(१) परम्परयेतिपदे तत्पदस्य संकेतः । तथा च यदि "क्रियाऽऽश्रयत्वेमवाधिकरणत्वम्" स्वीक्रियते चेत्तर्हि साक्षात्सम्बन्धेन क्रियाऽऽश्रयत्वात्कर्त्रादीनामप्यधिकरणत्वापत्तिः स्यादतः "परम्परये"ति प्रतिपादितम् ।

आक्षेपनिराकरणपूर्वकसिद्धान्तसाधकप्रकारवाक्यम्—

न चैवं क्रियानिरूपिताधिकरणत्वस्यैव सर्वत्र सप्तम्यर्थत्वे विना क्रियायोगं भूतले घट इत्यादिप्रयोगो न स्यादिति वाच्यम्, इष्टत्वादिति वैयाकरणाः ।

अधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः । स च यत्र क्रियाऽन्वयी तत्र कारकत्वव्यवहारः, अत एव भूतले घट इत्यादिक्रियाशून्यवाक्याद् भूतलाधेयो घट इति शाब्दबोधो भवत्येवेति नैयायिकाः ॥ १०६ ॥

**वैयाकरण इति**—न हि क्रियारहितं वाक्यमस्तीति व्याप्तेस्तेषामभिप्रेतत्वादिति भावः । क्रियारहितवाक्यादपि शाब्दबुद्धेरानुभविकत्वेन न तादृशव्याप्त्यादरो नैयायिकानामिति दर्शयति—**अधिकरणत्वमिति**—तथा च क्रियातदसमभिव्याहारस्थले परम्परयाऽधिकरणत्वादिकं बोध्यते, अन्यत्र तु साक्षात्परम्परासाधारणमिति विशेषः ॥ १०६ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

गृहे स्थाल्यामोदनं पचतीत्यत्र निरुक्तसंबन्धेन गृहाधिकरणकस्थाल्यधिकरणकौदनकर्म्मकपाकानुकूलकृतिमानित्यन्वयधीः । भूतले घट इत्यादौ सप्तम्या अधिकरणत्वमर्थः । तत्र प्रकृत्यर्थस्याश्रयत्वेन प्रथमान्तार्थस्य च निरूपकत्वेनान्वयः, तथा च भूतलनिष्ठाधिकरणतानिरूपको घट इत्यन्वयधीरिति प्राञ्चः । निरूपकत्वादेः सम्बन्धस्य प्रतियोगिताऽवच्छेदकत्वाभावान्नञर्थान्वयानुपपत्त्या आधेयत्वमेव सप्तम्यर्थः, तत्र च प्रकृत्यर्थस्य निरूपकतया प्रथमान्तार्थस्याधिकरणतयाऽन्वये भूतलनिरूपिताऽऽधेयत्ववान् घट इत्यन्वयबोध इति नव्याः ॥ १०७ ॥

प्राचां मतमाह—**गृह इति** । **निरुक्तेति**—परम्परेत्यर्थः । प्राचां मतेऽस्वरसं प्रकाशयन् नव्यमतमाह—**निरूपकत्वादेरिति** । **सम्बन्धस्येति** । वृत्त्यनियामकतयेति शेषः ॥ १०७ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

"चर्म्मणि द्वीपिनं हन्ति" इत्यादौ निमित्तसप्तमी, निमित्तत्वमुद्देश्यत्वं, तच्च फलत्वेन फलवत्त्वेन वा इच्छाविषयत्वम् । प्रथमे मशकनिवृत्तौ धूमं करोतीति । द्वितीये च 'चर्मणि द्वीपिनं हन्ती'त्यादिचर्म्मादेः सिद्ध-

त्वादिच्छाविषयत्वाभावेऽपि साध्यीभूतयथेष्टविनियोगरूपफलवत्त्वेनोद्देश्यत्वात्(१)। अत्र च यथायथं तादृशेच्छासमम्यर्थः, तस्याश्च धात्वर्थे प्रयोज्यत्वसम्बन्धेनान्वयः, तथाच मशकनिवृत्तीच्छाप्रयोज्यधूमकरणाश्रयः। चर्मविषयकयथेष्टविनियोगरूपफलप्रकारकेच्छाप्रयोज्य-द्वीपिकर्मकहननानुकूलकृतिमानिति यथाक्रमेणान्वयबोधः ॥ १०८ ॥

फलत्वेनेति—फलं—क्रियाजन्यं करोतीति—धूमकृतेर्मशकनिवृत्तिफलकत्वात् फलत्वेनोद्देश्यत्वमिति भावः। फलवत्त्वेनोद्देश्यत्वादिति—सिद्धेऽसिद्धोपरागेण इच्छासम्भवादिति भावः(२)। यथायथमिति—मशकनिवृत्तावित्यादौ फलत्वेन चर्मणीत्यादौ फलवत्त्वेन इच्छा समम्यर्थः ॥ १०८ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

अत्र च "निमित्तात् कर्मयोगे" इत्यनुशासनाद् यत्किञ्चित्कर्मप्रकारकबोधजनकधातुप्रयोगो नियामकः। सकर्मकधातौ कर्मबोधकपदसमभिव्याहारेण कर्मप्रकारकबोधजनकता। यथा-द्वीपिनं हन्तीत्यादौ। अकर्मधातौ च कर्मविशिष्टस्वार्थशक्त्या(३) यथा—"आदित्यो रजनीक्षये यदुदेति" इत्यत्र उदयगिरिशिखरमारोहतीत्यर्थकरणात् कर्मविशिष्टबोधजनकत्वमविशिष्टम्। अत्र रजनीक्षयस्य सूर्य्योदयाजन्यत्वेऽपि निमित्तत्वं लोकज्ञानविषयत्वेनोद्देश्यत्वरूपं, तेन लोकानां रजनीक्षयज्ञानार्थं यदुदेतीत्यर्थः ॥ १०९ ॥

कर्म्मयोग इत्यस्य व्याख्यामाह—यत्किञ्चिदिति। ननूदयक्रियायाः फलत्वफलवत्त्वयोरभावेन कथं रजनीक्षयस्य निमित्तत्वमत आह—सूर्य्योदयाजन्य-

---

(१) अयम्भावः- 'चर्मणि द्वीपिनं हन्ती'त्यादौ चर्मण्युद्देश्यत्वाभावः, यतस्तेन व्याधादीनामभीष्टसिद्धिर्न स्यात्, अतः "फलवत्त्वेना"युक्तम् अर्थात् फलमस्ति अस्मिन्निति फलवान्, तद्भावस्य चर्मणि विनियोग (विक्रय) रूपेणेच्छाविषयत्वमस्त्येवेति बोध्यम्।

(२) अयम्भावः-"सिद्धे" सम्पन्ने कार्य्ये, प्रकृते च चर्म्मणीत्यर्थः। "असिद्धोपरागेण" असम्पन्नधर्मप्रकारेणेत्यर्थः प्रकृते मनोऽनुकूलविनियोग (विक्रय) रूपं यद् असम्पन्नद्रव्यात्मकरूपं साध्यीभूतफलं तत्प्रकारेणासम्भवं बोध्यम्।

(३) अकर्मकधातावपि लक्षणया कर्मत्वविशिष्टस्वार्थमादाय तन्निमित्तत्वमवधेयम्।

त्वेऽपीति—तदुभयोरेकदोत्पन्नत्वादिति भावः । ज्ञानविषयत्वेनोद्देश्यत्वरूपमिति ।—तथा च तत्र विषयत्वसम्बन्धेन ज्ञानरूपफलवत्त्वेनोद्देश्यत्वमस्तीति भावः । लोकानामित्यादि —रजनीक्षयविषयकलोकज्ञानप्रकारकेच्छाप्रयोज्योदयानुकूलकृतिमानिति वाक्यार्थः । इदमत्रावधेयं—"निमित्तात् कर्म्मयोगे" इति लक्षणस्योक्तव्याख्यायां "वस्त्रेषु रजकमवधीत् कृष्णः" इति वोपदेवोक्तोदाहरणमपि सङ्गच्छते, वस्त्रविषयकयथेष्टविनियोगप्रकारकेच्छाधीनरजककर्मकहननानुकूलकृतिमानित्याकारकस्तत्र बोधः । किन्तु "मुक्ताफलाय करिणं हरिणं पलाय" इत्यादिप्रयोगविरोधः । जगदीशस्तु—कर्म्मयोगे—उपष्टम्भाख्यसम्बन्ध इति व्याचष्टे; उपष्टम्भाख्यसंयोगश्च प्राणिनां दन्त-केश त्वगादिष्वेव; एतादृशव्याख्यायां "हन्तेः कर्म्मण्युपष्टब्धात् प्राप्तुमर्थे तु सप्तमीम् । चतुर्थीबाधिकामाहुश्चूर्णिभागुरिवाग्भटाः" इति कारिकामपि प्रमाणं दर्शयति । मुक्ताफलायेत्यादौ करिण्युपष्टब्धमपि मुक्ताफलं प्राप्तुमिति नार्थः, किन्त्वाहर्त्तुमितिरीत्या तादृशप्रयोगमुपपादयति च, तन्मते वोपदेवोक्तप्रयोगविरोधो वस्त्रादौ रजकस्य तादृशसम्बन्धाभावात्, ग्रन्थकारोक्तस्य "आदित्यो रजनीक्षये" इति प्रयोगस्य विरोधश्च । मुक्ताफलायेत्यादि महाजनप्रयोगाच्च ग्रन्थकृन्मतेऽनुपपत्तिरिति केचिद्वदन्ति । जगदीशमतानुसारिणस्तु महाजनप्रयुक्तत्वाद् आदित्य इति प्रयोगसाधुत्वमुपपाद्य वोपदेवोक्तप्रयोगो न साधुरिति वदन्ति । वस्तुतस्तु सिद्धान्तवागीशमतमेव साधु, न चैवमुक्तकारिकाविरोधः, कर्म्मण्युपष्टब्धादित्यस्य कर्म्मप्रकारकबोधजनकधातुयोगादित्यर्थकरणात् । प्राप्तुमर्थे—प्राप्तीच्छार्थे, सा चेच्छा फलत्वेन फलवत्त्वेन वा, मुक्ताफलायेत्यादौ मुक्ताफलमाहर्त्तुमित्येवार्थ इति वोपदेवोक्तप्रयोगः साधुरित्यवधेयम् ॥ १०९ ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

"शरदि पुष्प्यन्ति सप्तच्छदाः" इत्यादौ उत्पत्तिरपि सप्तम्यर्थः, शरदुत्पत्तिकपुष्पाश्रयाः सप्तच्छदा इति वाक्यार्थः । न च शरदुत्पत्तिकपुष्पाश्रये चम्पकादावपि तथा प्रयोगः स्यादिति वाच्यं, सप्तच्छदस्य पुष्पाश्रयत्वे लब्धे तुल्यवित्तिवेद्यतया सप्तच्छदवृत्तित्वस्यापि पुष्पेषु लाभात्, तदवच्छेदेन शरदुत्पत्तिकत्वान्वयस्य व्युत्पत्तिसिद्धत्वात् । चम्पकादिवृत्तिपुष्पत्वावच्छेदेन शरदुत्पत्तिकत्वाभावेन तथा प्रयोगाभावात् । धातोर्वा सप्तच्छदीयपुष्पे लक्षणेति कश्चित् ॥ ११० ॥

कालसप्तम्या अर्थमाह—शरदीति। पुष्पाश्रया इति—आश्रयत्वमाख्यातार्थः। तथेति—शरदि पुष्प्यन्ति चम्पका इत्यर्थः। सप्तम्यर्थोत्पत्तेरवच्छेदावच्छेदेनान्वयमुपगम्य तादृशप्रयोगवारणे पुष्पत्वावच्छेदेन शरदुत्पत्तिकत्वबाधाच्छरदि पुष्प्यन्तीति प्रयोगो न स्यात्, सप्तच्छदीयपुष्पत्वस्यान्वयिताऽनवच्छेदकतया तद्रूपावच्छेदेन शरदुत्पत्तिकत्वस्यान्वयासम्भवादतस्तद्रूपेण बोधं सङ्गमयति—सप्तच्छदस्येति। तदवच्छेदेनेति।—सप्तच्छदीयपुष्पत्वावच्छेदेनेत्यर्थः। व्युत्पत्तिसिद्धत्वात्—आकाङ्क्षालभ्यत्वादित्यर्थः, शाब्दबोधे तुल्यवित्तिवेद्यत्वानुपगमे शाब्दबोधे सप्तच्छदीयपुष्पत्वस्यान्वयिताऽनवच्छेदकत्वेऽपि तात्पर्यादिवशात् शाब्दबोधे तदवच्छेद्यत्वोपगमात् शाब्दादन्यत्रान्वयिताऽनवच्छेदकधर्म्मावच्छेद्यत्वभानानुपगमादिति ध्येयम्। न चेत्यादेः समाधानमाह—चम्पकादौति—यद्यपि शरदीत्यादौ सप्तम्या आधेयत्वार्थकत्वोपगमेनैवोपपत्तौ गुरुतरोत्पत्त्यर्थकत्वमनुचितं, न चात्राधेयत्वार्थकत्वे आधारसप्तमीविधानादेवोपपत्तौ स्वतन्त्रकालसप्तमीविधानं सूत्रकृतामनुचितमिति वाच्यं, पृथिव्यां घटः, तन्तुषु पट इत्यादौ कालिकदिक्कृतादिसंसर्गवाचिशब्दासमभिव्याहृतसप्तम्या दैशिकसम्बन्धावच्छिन्नाधेयत्वमेव बोध्यते, अन्यथा क्रियायां घटत्वमित्यादिप्रयोगापत्तिः, क्रियाऽऽदावपि कालिकादिसम्बन्धेन वृत्तित्वात्, क्रियायां कालिकादिना घटत्वमित्यादौ कालिकादिसंसर्गवाचिशब्दसमभिव्याहारात् सप्तमीतः कालिकादिसम्बन्धावच्छिन्नाधेयत्वं बोध्यते; इत्थञ्च कालिकादिसंसर्गवाचिशब्दासमभिव्याहृतकालवाचिशरदादिशब्दोत्तरसप्तम्या कालिकसम्बन्धावच्छिन्नाधेयत्वबोधनाय कालसप्तमीविधायकसूत्रसार्थक्यात्, न चैवं हेमन्ते पुष्प्यन्ति सप्तच्छदा इति प्रयोगः स्यादिति वाच्यं, शरद्वृत्तिसप्तच्छदीयपुष्पत्वावच्छेदेन हेमन्तादिवृत्तित्वासम्भवात् तादृशप्रयोगविरहात्, तथाऽपि सप्तच्छदीयपुष्पमात्रस्य हेमन्तादिवृत्तेरसम्भवाभिप्रायेण सप्तम्या गुरुतरोत्पत्त्यर्थकत्वकथनमिति सुधीभिश्चिन्तनीयम्। जगदीशस्तु शरदीत्यादौ वृत्तित्वमेव सप्तम्यर्थः, आख्यातार्थश्च उत्पत्तिः, तत्रैव व्युत्पत्तिवैचित्र्येण सप्तम्यर्थवृत्तित्वस्यान्वयः, तेन शरदुत्पत्तिकपुष्पस्य हेमन्ते सत्त्वेऽपि हेमन्ते पुष्प्यन्ति सप्तच्छदा इत्यादिको न प्रयोगः, एवञ्च शरत्कालवृत्तिर्या पुष्पोत्पत्तिस्तदाश्रयः सप्तच्छद इत्याद्याकारकस्तत्र बोधः। शरदि पुष्प्यन्ति चम्पका इत्यादिप्रयोग इष्ट एव, शाब्दबोधे तुल्यवित्तिवेद्यतया अन्वयिताऽवच्छेदकधर्मव्यापकतायाश्चानुपगमेन उक्तरीत्या तद्वारणादि-

स्याद । अतएव गोविन्दीयरमणत्वावच्छेदेन शरत्कालवृत्तित्वासम्भवेऽपि "रेमे शरदि गोविन्दः" इति वोपदेवोक्तोदाहरणमपि सङ्गच्छत इति ॥ ११० ॥

सिद्धान्तसाधकप्रकारवाक्यम्—

सति सप्तम्याः सामानाधिकरण्यमर्थः, तच्च क्वचित् कालिकं, क्वचिद् दैशिकम् । तत्राद्यं समानकालीनत्वपर्य्यवसितं, यथा—गोषु दुह्यमानास्वागतः, दुग्धास्वागत इत्यादौ । अत्र च समानकालीनत्वे सप्तम्यर्थेदोहनमात्रस्य न निरूपकत्वेनान्वयः, महिष्यादिदोहनकालीने तथाऽप्रयोगात् । नापि गोदोहनस्य, धातुना गोदोहनत्वेनानुपस्थितेः ॥ १११ ॥

सति सप्तम्या इति । भावसप्तम्या इत्यर्थः । कालिकं—कालिकसम्बन्धावच्छिन्नम् । दैशिकं—कालिकान्यसम्बन्धावच्छिन्नम् । तत्र—तयोर्मध्ये । कालीने तथाऽप्रयोगादिति । गोषु दुह्यमानास्वागत इत्यप्रयोगादित्यर्थः, दोहनकर्म्माभिन्ना गौः दोहनसमानकालीनागमनानुकूलकृतिमानित्यन्वयबोधस्य समूहालम्बनरूपस्य तत्रापि सम्भवादिति भावः ॥ १११ ॥

दृष्टान्तपूर्वकसाधकप्रकारवाक्यम्—

किन्तु दण्डी पुरुषो गच्छतीत्यादौ यथा परम्परया पुरुषविशेषणत्वापन्न-दण्डसमानकालीनत्वं गमने भासते तथा गोविशेषे कर्मताविशेषणताऽऽपन्नस्यैव दोहनस्य समानकालीनत्वमागमने भासते । इत्थञ्च तादृशगोदोहनसमानकालीनागमनानुकूलातीतकृतिमानिति वाक्यार्थः ॥११२॥

किन्त्विति । परम्परयेति । अभेदे तृतीया, स च समानकालीनत्वान्वयी । गमने—गमनकृतौ । तथा—परम्पराऽभिन्नं तादृशदण्डनिरूपितसमानकालीनत्वं दण्डस्य संसर्गविधया गमनकृतौ यथा भासते, तथेहापीति समुदायार्थः । विशिष्टानुयोगिकवैशिष्ट्यबोधस्थले समानकालीनत्वादिसम्बन्धेन धर्म्मिताऽवच्छेदकताऽऽपन्नस्यैव पारतन्त्र्येणैव भानं, न तु तदनापन्नस्य स्वातन्त्र्येणेति भावः । तादृशगवीति—दोहनकर्म्मताविशिष्टगवीत्यर्थः, तादृशगोपद-दोहनपदयोर्द्वन्द्वानन्तरं समानकालीनपदेन सह षष्ठीतत्पुरुषः, तेन तादृशगोः दोहनस्य च कालीनत्वघटककालेऽन्वयलाभः ; तथा च गोषु दुह्यमानास्वागत इत्यादौ दोहनकर्म्मताविशिष्टगोरधिकरणत्वसम्बन्धेन कालांशेऽन्वय इति भावः । न च दोहनकर्म्मताविशिष्टगवाधिकरणकालवृत्तित्वस्यागमने बोधादेवेष्टसिद्धौ किं दोहनस्य पारतन्त्र्येणान्व-

येनेति वाच्यम्; तादृशस्यानुभविकत्वात्, दुग्धास्त्वागत इत्यादौ तन्मात्रेण गत्यन्तराभावाच्चेति ॥ ११२ ॥

दृष्टान्तपूर्वकसाधकप्रकारवाक्यम्—

दुग्धास्त्वागत इत्यादौ न तथाऽन्वयः (१)दोहनस्यातीतत्वेन तद्बाधात्। किन्तु वर्त्तमानध्वंसप्रतियोगिकृतिजन्यदोहनकर्म्मताऽऽपन्नासु गोषु आगत इति वाक्यार्थः। गोविशेषण-कर्म्मताविशेषणदोहनविशेषण-कृतिविशेषण-प्रतियोगित्वविशेषणताऽऽपन्नस्य वर्त्तमानध्वंसस्य समानकालीनत्वमागमने भासते। तथा च तादृशवर्त्तमानध्वंससमानकालीनागमनानुकूलातीतकृतिमानिति वाक्यार्थः ॥ ११३ ॥

तद्बाधादिति—वर्त्तमानागमने अतीतदोहनसमानकालीनत्वबाधादित्यर्थः। तथा चेत्यादि-वाक्यार्थ इत्यन्तः पूर्वोक्तवाक्यार्थगर्भे कालांशे गोविशेषणताऽऽपन्न-कर्म्मत्वविशेषणताऽऽपन्नदोहनविशेषणताऽऽपन्नकृतिविशेषणताऽऽपन्नप्रतियोगिकत्व-विशेषणताऽऽपन्नस्यैव वस्तुगत्या वर्त्तमानध्वंसस्य पारतन्त्र्येण स्वप्रतियोगिकृति-जन्यदोहनकर्म्मताऽऽपन्नगोमत्त्वसम्बन्धेनान्वयप्रदर्शनाय, नतु स्वातन्त्र्येण तादृशगवादिमत्त्वं स्वकर्म्मकदोहनध्वंसवत्त्वसम्बन्धेनेत्यवधेयम्। न चोक्तस्थले तादृशगवादिमत्त्वं दोहनकाले एव, तत्र वर्त्तमानध्वंसबाधात् तादृशपरम्परया कथं तदन्वय इति वाच्यम्; साक्षात् परम्परया स्वविशिष्टो यस्तदन्वयिनि परम्परासम्बन्धेन विशेषणस्य विशेष्यान्वयिताऽवच्छेदकावच्छिन्ने धर्म्यन्तरेऽपि भानस्य सर्व्वैरुपगमात्, तादृशान्वयिताऽवच्छेदकञ्च प्रकृते कालत्वं, न चागमनविशेषण-ताऽऽपन्नवृत्तित्वांशे निरूपितत्वसम्बन्धेन तादृशगवाधिकरणकालस्य बोधात् तदंशे तादृशबोधस्य मुख्यविशेष्यत्वापत्तिरिति वाच्यम्; तादृशविशेष्यताकबोधस्य सिद्धान्तवागीशमते इष्टत्वादित्यवधेयम्। एवं गोषु दोग्धव्यास्त्वागत इत्यादौ पूर्वोक्त-वर्त्तमानध्वंसपदस्थले वर्त्तमानप्रागभावपदं प्रक्षिप्यान्वयबोधो द्रष्टव्यः ॥ ११३ ॥

दृष्टान्तपूर्वकसाधकप्रकारवाक्यम्—

गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ तु दैशिकं, ततो हि गुणकर्म्मा-न्यत्वसमानाधिकरणस्य सत्त्वे बोधात्। यद्यपि "यस्य च भावेन भावल-

---

(१) आगमनांशे दोहनसमानकालीनागमनानुकूलकृतिमानिति पूर्वोक्तप्रकारेणान्वयबोधो न जायत इत्यर्थः।

त्वाम्" ( २।३।३७ पा० ) इत्यनेन क्रियायाः समानाधिकरण्ये सप्तमीविधानाद् नामार्थयोः समानाधिकरण्ये सप्तमी न युक्ता, तथाऽपि गुणकर्म्मान्यत्वे सति सत्त्वादित्यभियुक्तप्रयोगदर्शनात् सूत्रे भावपदं धर्म्मपरतया व्याख्यायैतत् सङ्गमनीयम् । यस्य धर्मेण धर्म्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते ततः सप्तमीति सूत्रार्थः । यस्य क्रिययाऽन्यस्य क्रियाऽन्तरं लक्ष्यत इति व्याख्यानन्तु शाब्दिकानां प्रायिकमेवमन्यत्राप्यूह्यम् ११४

द्वितीये त्वाह—गुणेति । सतीति—इदञ्च सप्तम्या दैशिकसामानाधिकरण्यतात्पर्यग्राहकम् । यस्य च भावेनेति—यस्य भावेन—यत्क्रियया सह, भावः—क्रियाऽन्तरं, तस्य (१)स्वसमानाधिकरणत्वेन उक्तरीत्या लक्षणं—प्रतिपत्तिस्तद्बोधकपदात् सप्तमीति सूत्रार्थदर्शनादिति । इदमुपलक्षणं, गोषु दुग्धास्वागत इत्यादौ तादृशक्रियासामानाधिकरण्यबाधेन वर्त्तमानध्वंसादिसामानाधिकरण्यस्यैव बोधाच्चेत्यपि बोध्यम् । एतत् सूत्रम् । यस्य धर्म्मेणेति, यदभिन्नधर्म्मेणेत्यर्थः, तथा च लक्षणे भावपदं धर्म्मपरम् । यस्य चेति षष्ठी अभेदार्थिकेति भावः । ननु पूर्वोक्तार्थः केषामित्यत आह—शाब्दिकानामिति—तथा च तादृशार्थः शाब्दिकानामेव नास्माकमिति भावः ॥ ११४ ॥

समाप्ता माधवी कारकचक्रटीका ।

---

(२)एको वृक्षः पञ्च नौका भवन्तीत्यादौ वृक्षपदं परम्परया वृक्षारम्भकारभ्यपरं, न तु तदारम्भकपरम्; वृक्षे विनष्टे वृक्षावयवानां द्रव्यारम्भकत्वात्, तेषाञ्च नियमेन वृक्षारम्भकत्वाभावात्, नौकापदञ्च नौकाऽऽरम्भकपरम् । एवञ्च एकवृक्षारम्भकारभ्यद्रव्यं पञ्चनौकाऽऽर-

---

( १ ) अत्रैवं मूलाभिप्रायोऽवगन्तव्यः, "यस्य च भावेन भावलक्षणम्" इति सूत्रस्य यस्य क्रियया क्रियान्तर इति व्याख्यानात् क्रिययोः सामानाधिकरण्ये सप्तमी तत्सूत्रेणानुशिष्टेति गुणकर्मान्यत्वे सति सत्त्वादित्यादौ यद्यपि सप्तमी न युक्ता तथाऽपि गुणकर्मान्यत्वे सति सत्त्वादित्यभियुक्तोक्तप्रयोगदर्शनात् सूत्रतद्व्याख्यानयोर्भावक्रियापदे धर्मपरे । तथा च यस्य धर्मेण धर्मान्तरं निरुक्त सामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमीति सूत्रार्थेन दोषोद्भवनसम्भावनाऽपि न सम्पद्यतेति बोध्यम् ।

( २ ) अत्रारभ्य समाप्ति यावद् आहृतपुस्तके नोपलभ्यते ।

म्भकं भवतीति वाक्यार्थः, नौकापदं तादृशविलक्षणसंयोगारम्भक-द्रव्यपरम् ॥ ११५ ॥

एवं यूपाय दार्वित्यादौ दारुपदं दार्ववयवारभ्यद्रव्यपरं, चतुर्थ्या उद्देश्यत्वं जनकत्वञ्चार्थः, तत्राद्यं प्रकृत्यर्थस्य विशेषणतयाऽन्यच्च विशेष्यतयाऽन्वेति; तथा च उद्देश्यीभूतयूपजनकदार्ववयवारभ्यंद्रव्यमित्यन्वयधीः । राज्ञः पुरुषः, पुरुषस्य दण्डः, पृथिव्या रूपं, शङ्खस्य जनकत्वमित्यादौ स्वत्वं, संयोगित्वं, समवेतत्वं, निरूपितत्वञ्च यथायथं षष्ठ्यर्थः ११६

निर्द्धारणे षष्ठ्याः "गवां कृष्णा सम्पन्नक्षीरा" इत्यादौ भेदोऽभेदश्चार्थः, कृष्णापदस्य लक्षणया कृष्णाऽन्याऽप्यर्थः । ( ङ ), षष्ठ्यर्थस्तादात्म्यं कृष्णापदार्थे शक्ये लक्ष्ये चान्वेति, विधेयस्य सम्पन्नक्षीरेत्यस्य एतादात्म्येन कृष्णायां, तदन्वितषष्ठ्यर्थभेदस्य चाधाराधेयभावेन कृष्णाऽन्यस्मिन् लक्ष्येऽप्यन्वयः; एवञ्च गवाभिन्ना कृष्णा सम्पन्नक्षीराभिन्ना गवाभिन्ना कृष्णाऽन्या सम्पन्नक्षीरभिन्नेत्यन्वयधीः; प्रपञ्चितमिदमेव कारकार्थविचारेऽस्माभिरिति ॥ ११७ ॥

इति महामहोपाध्यायश्रीभवानन्दसिद्धान्तवागीशभट्टाचार्यविरचितं
षट्कारकविवेचनं समाप्तम् ।



विद्याविलास प्रेस, काशी ।

# अभिज्ञानशाकुन्तलं नाटकम् ।

## 'रुचिर'-'किशोरकेलि' संस्कृत हिन्दी टीका द्वयोपेतम् ।

जितनी टीका टिप्पणी इस ग्रन्थ पर छपी हैं उन सबसे उत्तम परीक्षा के ढङ्ग पर यह टीका बनी है। किशोर ( बालक ) लोगोंका केलि अर्थात् खेल जैसा आनन्द बढ़ाने वाला होता है; ऐसी ही यह 'रुचिर-किशोरकेलि' टीका किशोर अवस्था वाले छात्रोंके लिये अत्यन्त आनन्ददायिनी हुई है। विस्तृत भूमिका, महाभारतीय तथा पद्मपुराणोक्त शकुन्तलोपाख्यान, विस्तृत नाटकीय पदार्थसूची जो किसी भी अन्य संस्करणों में नहीं है, सहित **राजसंस्करण** का मूल्य २)

# स्वप्नवासवदत्त नाटकम्-

## अन्य संस्करणों से इस संस्करण की विशेषतायें-

इस संस्करण के **"प्रबोधिनी"** नामक संस्कृत व्याख्या में अन्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, कोश, अलङ्कार, छन्द नाट्य-लक्षण आदि विषय और साथ ही साथ **"प्रकाश"** नामक प्राञ्जल भाषा टीका भी रख दी गयी है।

## सब से बड़ी बात-

यह है कि ग्रन्थ के आदि में अति सरल संस्कृतमयी विस्तृत **भूमिका** भी दी गयी है। जिससे **ग्रन्थकार का समय** उसकी विशेषतायें और प्रस्तुत ग्रन्थ की **मननीय समालोचना** का काम बड़े सरल ढंग से हल हो गया है। **कथासरित्सागर**, तथा **बृहत्कथामञ्जरी** के वे तरंग भी उद्धृत कर दिये गये हैं कि जिनका कथानक इस ग्रन्थ के कथानक के अनुसार है। इन विशेषताओं के अतिरिक्त संस्कृत तथा हिन्दी दोनों ही में **कथासार** भी लिख दिया गया है, परीक्षोपयोगीसंपूर्णविषयों से युक्त **द्वितीय संस्करण** सजिल्द पुस्तक का मूल्य १।)

# दशकुमारचरितम् ।

## बालविबोधिनी-बालक्रीडा संस्कृत हिन्दी टीका द्वयोपेतम् ।

साहित्याचार्य पं० ताराचरण भट्टाचार्य कृत बालविबोधिनी टीका तथा पं० रामतेजपाण्डेय साहित्यशास्त्री कृत बालक्रीडा टीका से युक्त परीक्षोपयोगी यह संस्करण सब संस्करणों से श्रेष्ठ है। विशेष क्या आप स्वयंपरीक्षा कर निर्णय कर सकते हैं।

पूर्वपीठिका ॥) पूर्वपीठिका तथा प्रथम और अष्टम उच्छ्वास ।॥)

---

प्राप्तिस्थानम्—**चौखम्बा संस्कृत पुस्तकालय, बनारस ।**

## २४ वेणीसंहारनाटकम् ।

### 'प्रबोधिनी'—'प्रकाश' संस्कृत हिन्दीटीकाद्वयोपेतम् ।

इस ग्रन्थके टीकाकारों ने सभी नवीन व प्राचीन प्रकाशित टीकाओंका गुण-दोष विवेचन करके नाटकीय व्याख्या के ढङ्ग पर श्लोकान्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, अलङ्कार तथा कोषादि प्रमाण में शब्दान्तर देकर समन्वय करते हुए प्रबोधिनी और प्रकाश (संस्कृत–हिन्दी) टीकाओं से, श्लोक, प्राकृत तथा गद्य को इस तरह समझाया है कि, सुकोमल मति विद्यार्थी भी स्वयं इस से ज्ञान प्राप्त कर सकते हैं। इसमें प्रत्येक पात्र का लक्षण तथा नाटक, चम्पू, काव्य और महाकाव्य आदि का लक्षण भी जगह २ पर दे दिया गया है जो कि आजतक किसी भी अन्य संस्करणों में नहीं पाया जाता। इतनाही नहीं विस्तृत 'भूमिका' में सम्पूर्ण ग्रन्थ की समालोचना कर के सभी अङ्कों का संक्षिप्त 'कथासार' भी अलग लिख दिया गया है, जिससे संक्षेप में इस ग्रन्थ का कथानक समझने में बड़ी सुगमता हो गई है। किं बहुना, जिन स्थलों पर अन्य टीकाकारों ने ग्रन्थाशय न समझ कर मनगढ़न्त पाठ और टीका कर दी है उन स्थलोंको भली भांति सप्रमाण विस्तृत रूपसे 'कविवर–भट्टनारायण के' यथार्थ आशय का वर्णन कर के समन्वय किया गया है। [ ह. सी. १२१ ] १॥)

## भट्टिकाव्यम् १—६ सर्गपर्यन्तम् ।

### चन्द्रकला-विद्योतिनी-संस्कृत-हिन्दीटीकाद्वयोपेतम् ।

यह निःसङ्कोच कहा जा सकता है कि आज तक कोई भी इस ग्रन्थ की ऐसी सरल टीका नहीं थी जिससे विद्यार्थियों को परीक्षा में विशेष सहायता मिले तथा व्याकरणका भी पूरा ज्ञान हो। इसलिये हमारे योग्य सम्पादक ने विद्यार्थियों की कठिनाई को दूर करने के लिये इस संस्करण में–अन्वय, व्याख्या, प्रयोगपरिवर्त्तन, भावार्थ, और व्युत्पत्ति (कोश, अलङ्कार, छन्दोलक्षण) आदि विषयों से पद–पदार्थों को स्पष्ट करते हुये यत्र तत्र जयमङ्गल, मल्लिनाथ, और भरतमल्लिक की टीकाओं की आलोचना के साथ पाठभेद भी सुन्दर रूप से दर्शा दिया है। कतिपय पदों की व्युत्पत्ति तो ऐसी अपूर्व और अन्वेषणापूर्ण है कि आप देखते ही मुग्ध हो जायगें साथ २ इसकी "विद्योतिनी" भाषाटीका तो अपने नाम के अनुकूल सोने में सुगन्धि पैदा कर दी है। इतना ही नहीं इन विशेषताओं के अतिरिक्त परिशिष्ट में श्लोकानुगत धातु–रूप तथा प्रत्येक सर्गके संक्षिप्तरूपेण कथासार भी दे दिये गये हैं। आज तक ऐसा परीक्षोपयोगी उत्तम संस्करण अन्यत्र प्रकाशित नहीं हुआ है। २)

---